# श्रीमद्भागवतानुक्रमणी ।

[१. कथानामनुक्रमणी, २. नाम्नां विषयाणां च वर्णानुक्रमणी चेति विधाद्वयोपेता ।]

पण्डित टी. आर्. कृष्णाचार्येण संकलिता ।

तत्तनूजेन टी. के. वेंकोबाचार्येण
प्रकाशिता ।

## INDEX TO
# SRIMAD BHAGAVATAM

(1) TABLE OF CONTENTS AND
(2) ALPHABETICAL INDEX OF LEADING TOPICS, PLACES
AND PERSONS
COMPILED AND CARRIED THROUGH THE PRESS

BY

**Pandit T. R. Krishnacharya**

AND

*Published by*

**T. K. Venkobacharya**
*son of the Author*
***AND MANAGER***
**MADHVA VILAS BOOK DEPOT, KUMBAKONAM**



PRINTED AT THE
HINDI PRACHAR PRESS,
MADRAS.

1932.

# PREFACE TO BHAGAVATHA STORY INDEX.

A perusal of this INDEX will enable readers to locate and identify tales and stories in the Bhagavatha in reference to SKANDHA and ADHYAYA (Cantoes and Chapters.)

Unlike Mahabharata, Bhagavatha does not differ in Northern and Southern texts. There is not any great or significant or material divergence in readings. Four commentators are famous and well-known. 1. Sridhara-swami interprets Bhagavatha in the light of ADVAITA. 2. Veeraraghavacharya comments on the Bhagavatha in accordance with VISHISHTADVAITA, 3. Vallabhacharya's commentary conforms to the traditions of SUDDHA-ADVAITA, and 4. The commentary of Vijayadhvajacharya interprets the Bhagavatha in the light of DVAITA. There are other commentaries as well, but, the interpretations found in them can be subsumed under the main four.

Sridhara, Veeraraghava and Vallabha agree in the readings adopted. Vijayadhvaja however proceeds along a divergent path. The Tenth Skandha presents particular difficulty as Vijayadhvaja rejects some chapters found in the texts adopted by other commentators, who in their turn have rejected chapters adopted by the former. I do not propose to reject anything that is useful and I regard all the commentators reliable and trustworthy.

In our INDEX, stanzas of Sridhara epitomizing the essence of each chapter are printed and their meaning explained in plain Sanskrit prose. The INDEX will be useful to all.

# PREFACE TO ALPHABETICAL INDEX.

Even experts will sometimes find it difficult to identify and locate names, stories, achievements of the persons spoken of, in the Bhagavatha running over 18,000 (Eighteen Thousands) stanzas. The Alphabetical INDEX has been prepared with great care, and at great cost in the shape of remuneration to Pandits and other helpers.

1. Important and leading names are printed in thick type.
The explanations are in smaller types.

2. Names of SKANDHAS are indicated by the first letters thus Pra. (Prathama-skandha), Dvi. (Dviteeya-skandha) and so on.

3. The numbers of the Chapters (Adhyayas) are indicated in thick face numerals. Numbers of stanzas are noted in ordinary face numerals.

4. A long hyphen between quotation marks thus "—" indicates from X to Y.

5. It is hoped that the numbers indicated will apply to all the Editions of the Bhagavatha now available, and should readers notice any divergence, they are requested to peruse 3 or 4 stanzas before and after the context in question.

6. Excepting the one adopted by Vijayadhvajacharaya, other readings will agree in the number of the chapters.

KUMBAKONAM,
*1st January 1932.*

T. R. KRISHNACHARYA.

श्रीविदव्यासाय नमः

## श्रीमद्भागवतकथानुक्रमण्या भूमिका ।

सकृत् द्विवारं वा श्रीमद्भागवतं पठितवतां जनानाम् एकदैव स्कन्धाध्यायक्रमेण समस्तकथोपस्थितिरस्या अनुक्रमण्याः पठनेनानायासं स्यात् ।

श्रीमद्भागवते श्रीमन्महाभारतवत् श्रीमद्वाल्मीकिरामायणवच्च दक्षिणोत्तरदेशभेदेन पाठभेदो नास्ति । प्रायः सर्वदेशेष्वपि पाठसाम्यमेव । एतस्य महाग्रन्थस्य मुख्या व्याख्यातारः चत्वारः । ते च अद्वैतमतरीत्या व्याख्यातारः श्रीधरस्वामिनः । विशिष्टाद्वैतमतरीत्या व्याख्यातारः वीरराघवाचार्याः । शुद्धाद्वैतमतरीत्या व्याख्यातारः वल्लभाचार्याः । द्वैत(माध्व)मतरीत्या व्याख्यातारः विजयध्वजतीर्थाः । यद्यप्येतान्विना बहवो व्याख्यातारो वर्तन्ते ; तथाऽपि ते सर्वे एतच्चतुष्टयान्तर्भूता एव । तेषु प्रथमानां त्रयाणामाचार्याणां मूलपाठः एकरीतिक एव ।

अस्यां कथानुक्रमण्यां स्कन्धाध्यायादीनां क्रमः द्वैतपाठं विना अन्यपाठानामनुगुण एव स्यात् । विजयध्वजाचार्याणां पाठे । अध्यायेषु च क्वचित्क्वचिन्न्यूनाधिक्यं पौर्वापर्यव्यत्यासश्च वर्तते । तत्रापि दशमस्कन्धे इतरैरङ्गीकृताः केचन अध्याया अत्र न सन्ति । एतादृशो व्यत्यासः स्वल्पेषु स्थलेष्वेव वर्तते । अन्यत्र तु सर्वेषां सम एव पाठः ।

इतरैरनभ्युपगताः केचनाध्याया अत्राधिकाश्च सन्ति । अत्र कारणं वक्तुं नाहं शक्तः । चतुरोऽप्याचार्यान्प्रामाणिकानेवाहं चिन्तयामि ।

अस्यामनुक्रमण्यां प्रत्यध्यायं श्रीधरस्वामिभिर्विरचिताः अध्यायार्थसंग्रहरूपाः कारिकाः प्रथमं मुद्रयित्वा ततोऽनन्तरं वाक्यरूपं तद्व्याख्यानं चास्मिन्मुद्रितम् । अतः सर्वविधपुस्तकवतामप्युपयोग्येतद्भवेदिति प्रत्येमि ।

## नाम्नां विषयाणां च वर्णानुक्रमण्या भूमिका ।

अनेकवारं श्रीमद्भागवतं पठितवतां विदुषामपि अष्टादशसहस्रग्रन्थात्मके रत्नाकरवदतिविपुलेऽस्मिन्महति ग्रन्थे कान्युपाख्यानानि कुत्र वर्तन्ते, कस्य कीदृशः संबन्धः, केन केन कानि कानि कर्माणि कृतानि, समाननामानः कति वर्तन्ते इत्यादयो विषया न झटिति ज्ञातुं सुशकम् । तदर्थम् इयं विपुला वर्णानुक्रमणी महता श्रमेण सहायभूतेभ्यो विद्वद्भ्यः श्रमदक्षिणादानेन मुद्रकादिवेतनव्ययेन च संमुद्र्य सर्वेषां दृग्गोचरीकृता । सर्वविधन्यूनतावता मया रचितायामस्यामनुक्रमणिकायां शब्ददोषादयः स्युरेव तथाऽपि विमर्शका महान्तः तान्समीकृत्योपयुञ्जेयुरिति प्रार्थये ।

अत्र मुख्यपदानि स्थूलैरक्षरैर्मुद्रितानि । तद्विवरणं तु तनुभिरक्षरैः कृतम् ।

प्रथमं स्कन्धनाम प्र०, द्वि०, तृ० इत्यादिभिः स्थूलैः आद्यक्षरैः प्रदर्शितम् । अध्यायसंख्या स्थूलैः संख्याक्षरैः प्रदर्शिता । श्लोकसंख्यातु तनुभिरक्षरैः । द्वयोः संख्ययोर्मध्ये दत्ता तिरश्चीना "—" रेखा एतदारभ्यैतत्पर्यन्तमित्यस्य ज्ञापिका भवति । अत्र निर्दिष्टा श्लोकसंख्या भरतखण्डस्थेषु मुद्रितेषु लिखितेषु वा सर्वेषु पुस्तकेषु समैव स्यात् । यदि कुत्र चित्पुस्तके विसंवदेत चेत्तर्हि पूर्वत्रोत्तरत्र च द्वित्राः श्लोका द्रष्टव्याः । अध्यायसंख्या तु [कुत्र चिद्विजयध्वजीयपाठं विना] सर्वत्र संवदेतैव ।

कुम्भघोणम् ।<br>
१–जानुवरी, १९३२.

टी. आर्. कृष्णाचार्यः

श्रीवेदव्यासाय नमः ।

# श्रीमद्भागवतकथानुक्रमणिका ।

## प्रथमः स्कन्धः ॥ १ ॥

श्रीगोपालकृष्णाय नमः ॥

### प्रथमोऽध्यायः ॥ १ ॥

भगवता श्रीवेदव्यासेन श्रीमद्भागवतग्रन्थारम्भे मङ्गलाचरणम् ॥ १ ॥ नैमिषारण्ये सत्रदीक्षितैः शौनकादिऋषिभिः कदाचित्तत्रागतं रोमहर्षणपुत्रमुग्रश्रवोनामकं सूतपौराणिकं प्रति षट्प्रश्नकरणम् ॥ २ ॥

ते च–" तत्र तत्राञ्जसाऽऽयुष्मन " इति नवमेन (९) श्लोकेन पुंसामेकान्ततः श्रेयः किमिति प्रथमः प्रश्नः ॥ १ ॥ " अतः साधोऽत्र यत्सारम् " इति एकादशेन (११) श्लोकेन सर्वशास्त्रार्थसारं किमिति द्वितीयः ॥ २ ॥ " सूत जानासि भद्रं ते " इति द्वादशेन (१२) श्लोकेन भगवान्देवक्यां किमर्थं जात इति तृतीयः ॥ ३ ॥ " तस्य कर्माण्युदाराणि " इति सप्तदशेन (१७) श्लोकेन श्रीकृष्णस्य उदाराणि कर्माणि ब्रूहि इति चतुर्थः ॥ ४ ॥ " अथाख्याहि हरेर्धीमन " इति अष्टादशेन (१८) श्लोकेन भगवतो मत्स्यादिनानावतारकथाकथनप्रश्नः पञ्चमः ॥ ५ ॥ " ब्रूहि योगेश्वरे कृष्णे " इति त्रयोविंशेन (२३) श्लोकेन धर्मः कं शरणं गत इति षष्ठः प्रश्नः ॥ ६ ॥

### द्वितीयोऽध्यायः ॥ २ ॥

तदेवं प्रथमेऽध्याये षट् प्रश्ना मुनिभिः कृताः ।
द्वितीये तूत्तरं सूतश्चतुर्णामिह दत्तवान् ॥ १ ॥

सूतपौराणिकेन शुकाचार्यादिनमनपूर्वकं शौनकादिकृतप्रश्नप्रशंसनम् ॥ १ ॥ भगवद्भक्तितत्कथाश्रवणादिमहिमानुवर्णनेन चतुर्णां प्रश्नानामुत्तरदानम् ॥ २ ॥

तद्यथा–" स वै पुंसाम् " इति षष्ठेन (६) श्लोकेन भगवद्भक्तिजनकस्यैव धर्मस्य सारत्वकथनेन प्रथमस्योत्तरम् ॥ १ ॥ " मुमुक्षवो घोररूपान् " इति षड्विंशश्लोकमारभ्य चतुःश्लोक्या भगवद्भजनस्यैव सर्वशास्त्रगोचरत्वकथनेन द्वितीयस्योत्तरम् ॥ २ ॥ " भावयन्नेषसत्त्वेन " इति चतुस्त्रिंशेन (३४) श्लोकेन लोकपालनमेव सर्वेषां

भगवदवताराणां प्रयोजनम् । विशेषतः श्रीकृष्णावतारस्य इति तृतीयस्योत्तरम् ॥ ३ ॥ "स एवेदं ससर्जाग्रे इति त्रिंशेन (३०) जगत्सृष्ट्यादीनि तस्योदारकर्माणीति चतुर्थप्रश्नस्योत्तरम् ॥ ४ ॥ अवशिष्टयोर्द्वयोः प्रश्नयोरुत्तरं तृतीयेऽध्याये ।

## तृतीयोऽध्यायः ॥ ३ ॥

अवतारकथाप्रश्ने तृतीये वृत्तराभिधा ।
पुरुषाद्यवतारोक्त्या तत्तच्चारित्रवर्णनैः ॥ २ ॥

सूतपौराणिकेन शौनकादीन् प्रति "जगृहे पौरुषं रूपम्" इत्यादिभिः "संक्षेपेण भगवतः पुरुषाद्यवतारोक्त्या पञ्चमप्रश्नस्योत्तरम् ॥ ५ ॥ "कृष्णे स्वधामोपगते—पुराणार्कोऽधुनोदितः" इति श्लोकेन धर्मः पुराणश्रेष्ठं श्रीमद्भागवतमेव शरणं प्राप्त इति कथनेन षष्ठस्य प्रश्नस्योत्तरम् ॥ ६ ॥
द्वादशस्कन्धात्मकं समग्रं भागवतमपि पूर्वोक्तानां षट्प्रश्नानामेव विवरणरूपं ज्ञातव्यम् ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

तुर्ये भागवतारम्भकारणत्वेन वर्ण्यते ।
व्यासस्यापरितोषस्तु तपःप्रवचनादिभिः ॥ ३ ॥

शौनकेन सूतंप्रति श्रीव्यासेन भागवतकरणे कारणस्य तद्देशकालयोः शुकपरीक्षित्समागमप्रकारस्य परीक्षित्प्रायोपवेशहेतोश्च प्रश्नः ॥ १ ॥ सूतेन तत्प्रश्नानामुत्तरकथनोपक्रमः ॥ २ ॥ कदाचन सरस्वतीतीरे समासीने व्यासे स्वेन वेदविभजनपूर्वकं भारतप्रणयने कृतेऽप्यात्मनोऽकृतार्थत्वबुद्ध्या परिचिन्तयति सति नारदस्य तदाश्रमं प्रत्यागमनम् ॥ ३ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे सर्वधर्मेभ्यो हरिकीर्तनगौरवम् ।
व्यासचित्तप्रसादाय नारदेनोपदिश्यते ॥ ४ ॥

श्रीव्यासेन स्वस्यापरितोषकारणं पृष्टेन नारदेन व्यासं प्रति प्राधान्येन भगवच्चरित्रप्रतिपादकप्रबन्धप्रणयनोपदेशः ॥ १ ॥ तथा भगवत्कथाश्रवणादेः परमपुमर्थहेतुत्वे स्वस्यैव साक्षीकरणाय स्वपूर्वजन्मवृत्तान्तकथनम् ॥ २ ॥ पूर्वजन्मनि दासीसूनुना नारदेन बाल्ये योगिनां शुश्रूषणम् ॥ ३ ॥ तत्र तदुदीरितहरिकथाश्रवणसमुपजातहरिभक्तेर्बालस्य शुश्रूषासंतुष्टैर्योगिभिस्तस्मै ज्ञानोपदेशः ॥ ४ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

व्यासस्य प्रत्ययार्थं च षष्ठे प्राग्जन्मसंभवम् ।
स्वभाग्यं नारदः प्राह कृष्णसंकीर्तनोद्भवम् ॥ ५ ॥

स्वमातुर्मरणानन्तरं महाटवीं प्रविष्टस्य नारदस्य भगवद्ध्याने भगवता हृत्परोक्षीभूय पुनरन्तर्धानम् ॥ १ ॥ तद्देहं त्यक्तवतस्तस्य कल्पान्तरे चतुर्मुखान्नारदत्वेन जननम् ॥ २ ॥ नारदेन व्यासं प्रत्येतत्कथाकथनानन्तरं तत्पादाश्रमान्निर्गमनम् ॥ ३ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

अथभागवतश्रोतुर्जन्म वक्तुं परीक्षितः ।
सुतबालवधाद्द्रौणेर्दण्डः सप्तम उच्यते ॥ ६ ॥

श्रीव्यासेन नारदाज्ञानुसारेण भागवतं निर्माय स्वपुत्राय शुकाचार्याय तदुपदेशः ॥ १ ॥ शौनकेन कस्मिन्युगे प्रवृत्तेय [४।३] मिति पृष्टस्योत्तरतया सूतेन परीक्षिद्वृत्तान्तकथनोपोद्घाततयाऽश्वत्थामवृत्ता-

न्तकथनारंभः ॥ २ ॥ भीमसेनेन हतस्य दुर्योधनस्य प्रीतये शिबिरसुप्तान्पाण्डवेयान्हतवतोऽश्वत्थाम्नो वधायार्जुनस्यानुधावनम् ॥ ३ ॥ अश्वत्थाम्नः प्राणसंकटे प्राप्ते तेनार्जुनवधाय ब्रह्मास्त्रप्रयोगः ॥ ४ ॥ तत्प्रतिघातार्थमर्जुनेन प्रतिब्रह्मास्त्रप्रयोगः ॥ ५ ॥ ब्रह्मास्त्रद्वयेनोत्पन्नं प्रजोपप्लवमालक्ष्य अर्जुनेन श्रीकृष्णाज्ञया स्वास्त्रोपसंहारपूर्वकं अश्वत्थाम्नो बन्धनेन द्रौपदीसमीपप्रापणम् ॥ ६ ॥ द्रौपदीप्रार्थनयाऽर्जुनेनाश्वत्थाममूर्धन्यमणिहरणपूर्वकं तस्य शिबिराद्बहिर्निष्कासनम् ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमे कुपितद्रौणेरस्त्राद्रक्षा परीक्षितः ।
कृष्णेन तत्स्तुतिः कुन्त्या राज्ञः शोकश्च कीर्त्यते ॥७॥

युधिष्ठिरं राज्ये प्रतिष्ठाप्य द्वारकां जिगमिषति श्रीकृष्णे अश्वत्थामोपसृष्टापाण्डवेयास्त्रपीडितया उत्तरादेव्या श्रीकृष्णं प्रति मध्येमार्गं शरणगमनम् ॥ १ ॥ श्रीकृष्णेन सुदर्शनायुधेनाश्वत्थामास्त्रप्रतिघातपूर्वकं उत्तराया गर्भरक्षणम् ॥ २ ॥ कुन्त्या श्रीकृष्णस्तुतिः ॥ ३ ॥ युधिष्ठिरप्रार्थनया श्रीकृष्णस्य पुनर्हास्तिनपुरप्रवेशः ॥ ४ ॥ बन्धुवधहेतुकपापशङ्कया युधिष्ठिरेण परिशोचनम् ॥ ५ ॥

## नवमोऽध्यायः ॥ ९ ॥

युधिष्ठिराय भीष्मेण सर्वधर्मनिरूपणम् ।
कृष्णस्तुतिश्च मुक्तिश्च नवमे तस्य कीर्त्यते ॥ ८ ॥

श्रीकृष्णादिभिः सहितेन युधिष्ठिरेण भीष्मसमीपगमनम् ॥ १ ॥ भीष्मेण युधिष्ठिरादीन्प्रति नानाविधधर्मोपदेशः, श्रीकृष्णस्तवनपूर्वकं निजशरीरत्यागश्च ॥ २ ॥ भीष्मं संस्कृत्य नगरमागतेन युधिष्ठिरेण श्रीकृष्णधृतराष्ट्रानुमत्या नीत्या प्रजापालनम् ॥ ३ ॥

## दशमोऽध्यायः ॥ १० ॥

दशमे कृतकार्यस्य हस्तिनापुरतो हरेः ।
स्त्रीभिः संस्तूयमानस्य वर्ण्यते द्वारकागमः ॥ ९ ॥

श्रीकृष्णस्य द्वारकां प्रति प्रस्थानम् ॥ १ ॥ स्त्रीभिः कृता श्रीकृष्णस्तुतिः ॥ २ ॥ सायाह्ने श्रीकृष्णस्य आनर्तदेशगमनम् ॥ ३ ॥

## एकादशोऽध्यायः ॥ ११ ॥

आनर्तैः स्तूयमानस्य पुरीं निविश्य बन्धुभिः ।
एकादशे रतिः सम्यग्यादवेन्द्रस्य वर्ण्यते ॥ १० ॥
उत्सवैरुच्चलत्पौरमुदञ्चद्ध्वजतोरणम् ।
उल्लसद्रत्नदीपालि स्वपुरं प्रभुराविशत् ॥ ११ ॥

श्रीकृष्णस्य द्वारकां प्रविश्य वसुदेवदेवक्याद्यभिवादनपूर्वकं स्वभवनप्रवेशः ॥ १ ॥ तत्र बन्धुभिः सह सुखेन निवासः ॥ २ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

पूर्वोक्तं यत्प्रसङ्गाय द्रौणिदण्डादि विस्तरात् ।
द्वादशे तु तदेवाथ परीक्षिज्जन्म उच्यते ॥ १२ ॥

शौनकेन परीक्षित्कथां पृष्टेन सूतेन तं प्रति तत्कथनोपक्रमः ॥ १ ॥ मातुर्गर्भे द्रौण्यस्त्रतेजोदह्यमानाय परीक्षिते श्रीकृष्णेन स्वदिव्यरूपं प्रदर्श्यास्त्रतेजश्शमनपूर्वकमन्तर्धानम् ॥ २ ॥ अथ परीक्षिज्जननसमयसमागतैर्ब्राह्मणैर्युधिष्ठिरं प्रति परीक्षितो विष्णुरात इति नामकरणपूर्वकं जननप्रभृति निश्-

नावधि तदीयभविष्यत्सकलवृत्तान्तनिवेदनम् ॥३॥ अश्वमेधयाजनाय युधिष्ठिरसमाहृतेन श्रीकृष्णेन हास्तिनपुरमागत्य यागावसाने पुनर्द्वारकागमनम् ॥ ४ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

निर्गमो धृतराष्ट्रस्य विदुरोक्त्या त्रयोदशे ।
उक्तः पौत्राभिषेकेण वक्तुं राज्ञो महापथम् ॥ १३ ॥

कुरुपाण्डवयुद्धात्प्रागेव मन्त्राय धृतराष्ट्रेणाहृतस्य तत्पुत्रेण दुर्योधनेन तिरस्कृतस्य विदुरस्य तीर्थयात्रां निमित्तीकृत्य वनगमनम् ॥ १ ॥ तीर्थयात्राकाले मैत्रेयादधिगतभगवज्ज्ञानेन विदुरेण दुर्योधनवधानन्तरं हास्तिनपुरं प्रत्यागमनम् ॥ २ ॥ युधिष्ठिरेण द्वारकाजनकुशलं पृष्टेन विदुरेण तं प्रति यदुकुलक्षयं विना सकलवृत्तान्तकथनम् ॥ ३ ॥ विदुरबोधनाज्जातवैराग्येण धृतराष्ट्रेण हिमालयगमनम् ॥ ४ ॥ प्रातर्धृतराष्ट्रवन्दनाय तद्गृहं प्रविष्टे युधिष्ठिरे तत्र तददर्शनेन दूयमाने तदा यदृच्छासमागतेन नारदेन तं प्रति धृतराष्ट्रादीनां हिमालयगमनस्य ततः पञ्चमेऽहनि भविष्यतः तेषां देहत्यागस्य च कथनम् ॥ ५ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

चतुर्दशे त्वरिष्टानि दृष्ट्वा राजा विशङ्कितः ।
अश्रृणोदर्जुनात्कृष्णतिरोधानमितीर्यते ॥ १४ ॥

बन्धुदिदृक्षया द्वारकां गते पार्थे चिरायति सति युधिष्ठिरेण नानाविधदुर्निमित्तदर्शनम् ॥ १ ॥ ततः प्रत्यागतमर्जुनं प्रति युधिष्ठिरेण द्वारकाजनकुशलप्रश्नपूर्वकं तन्मुखमालिन्यादिकारणप्रश्नः ॥ २ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

कलिप्रवेशमालक्ष्य धुरं न्यस्य परीक्षिति ।
आरुरोह नृपः स्वर्गमिति पञ्चदशोऽब्रवीत् ॥ १५ ॥

अर्जुनेन युधिष्ठिरं प्रति स्वीयसकलाभ्युदयानां श्रीकृष्णानुग्रहैकहेतुत्वकथनम् । तथा विप्रशापनिमित्तकसकलयदुकुलक्षयस्य भगवतस्स्वधामोपगमस्य च कथनम् ॥ १ ॥ जातनिर्वेदेन युधिष्ठिरेण वज्रपरीक्षितोर्मधुरायां स्वपुर्यां चाभिषेचनपूर्वकं द्रौपद्या भ्रातृभिश्च सह स्वर्गारोहणम् ॥ २ ॥

## षोडशोऽध्यायः ॥ १६ ॥

ततश्च षोडशे भूमिधर्मयोः कलिखिन्नयोः ।
संवादे वर्ण्यते प्राप्तिः पालकस्य परीक्षितः ॥ १६ ॥

परीक्षित उत्तरकुमारपुत्र्या इरावत्या सह विवाहः । तस्यां जनमेजयादिपुत्रचतुष्टयोत्पत्तिश्च ॥ १ ॥ तेनाश्वमेधत्रययजनम् ॥ २ ॥ तेनदिग्विजये भद्राश्वकेतुमालादिवर्षविजयः ॥ ३ ॥ तेन कुत्रचित्कस्य चिदाश्चर्यस्य दर्शनम् ॥ ४ ॥ एकचरणावशिष्टेन वृषरूपिणा धर्मेण विवर्णां गोरूपधारिणीं धरणीदेवीं प्रति नानाविकल्पपूर्वकं शोककारणप्रश्नः ॥ ५ ॥ तया तं प्रति कलिकलितसर्ववर्णाश्रमधर्मलोपस्य श्रीकृष्णवियोगस्य च स्वशोककारणत्वकथनम् ॥ ६ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

ततः सप्तदशे राज्ञा कलेर्निग्रह उच्यते ।
तस्यैवंवीर्यभाजोऽपि वैराग्यं वक्तुमद्भुतम् ॥ १७ ॥

तत्र प्राचीसरस्वतीतीरे राजवेषधारिणा शूद्रेण ताड्यमानगोमिथुनदर्शनम् ॥ १ ॥ वृषभो धर्म

इति गौर्भूमिरिति शूद्रः कलिरिति च ज्ञातवता परीक्षिता कलिवधाय खड्गपरिग्रहः ॥ २ ॥ शरणगताय स्वस्य निवासाय किंचित्स्थानं याचमानाय कलये द्यूतादिस्थानपञ्चकदानम् ॥ ३ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

राज्ञस्त्वष्टादशे तस्य ब्रह्मशापो निरूप्यते ।
स चानुग्रह एवास्य जातो वैराग्यमावहन् ॥ १८ ॥

एकदा मृगयार्थं वनं गतेन क्षुत्पिपासार्दितेन परीक्षिता शमीकमुनेराश्रमं प्रविश्य पानीययाचनेऽपि मुनेः समाधिस्थतया तस्माज्जलमलभमानेन कोपात्तदंसे मृतसर्पनिक्षेपपूर्वकं स्वपुरगमनम् ॥ १ ॥ तच्छ्रवणरुष्टेन मुनिसुतेन परीक्षिते तत्सप्तमेऽहनि तक्षकदंशनप्रकारकशापदानम् ॥ २ ॥ समाध्युपरतेन मुनिना स्वपुत्रदत्तशापं ज्ञात्वाऽनुतापाधिगमः ॥ ३ ॥

## ऊनविंशोऽध्यायः ॥ १९ ॥

प्रायोपविष्टे गङ्गायां राज्ञि योगिजनावृते ।
शुकस्यागमनं तत्र प्रोक्तमेकोनविंशके ॥ १९ ॥

स्वनगरीं प्राप्तवतः परीक्षितः स्वकृतं ब्राह्मणापमानं स्मृत्वा पश्चात्तापः ॥ १ ॥ ऋषिपुत्रस्य शापं ऋषेः शिष्यमुखात् ज्ञातवता परीक्षिता गङ्गातीरे प्रायोपवेशः ॥ २ ॥ तत्र समागतानेकदेवर्ष्यादिपूजनपूर्वकं हरिकथागानप्रार्थना ॥ ३ ॥ तत्र यदृच्छासमागतं सकलसभ्यजनपूजितं शुकाचार्यं प्रति सप्रणामं मुमूर्षुणा कर्तव्यस्य जाप्यस्य त्याज्यस्य च निवेदनप्रार्थना ॥ ४ ॥

इति प्रथमः स्कन्धः ॥ १ ॥

श्रीगोपालकृष्णाय नमः ।

# द्वितीयः स्कन्धः ॥ २ ॥

द्वितीये तु दशाध्यायैः श्रीभागवतमादितः । उद्देशलक्षणोक्तिभ्यां संक्षेपेणोपवर्ण्यते ॥ १ ॥

## प्रथमोऽध्यायः ॥ १ ॥

तत्र तु प्रथमाध्याये कीर्तनश्रवणादिभिः ।
स्थविष्ठे भगवद्रूपे मनसो धारणोच्यते ॥ २ ॥
उक्तः पूर्वमुपोद्घातः सप्रसङ्गः शुकागमः ।
राज्ञा पृष्टं नृणां कृत्यमथाह शुकसन्मुनिः ॥ ३ ॥

शुकेन परीक्षितं प्रति मुमूर्षुणा नारायणस्मरणस्यावश्यं करणीयत्वकथनपूर्वकं तच्चरित्रप्रतिपादकभागवतपुराणकथनप्रतिज्ञानम् ॥ १ ॥ तथा सपरिकरभगवद्ध्यानप्रकारनिरूपणपूर्वकं स्थूलोपासनाय विराड्रूपनिरूपणम् ॥ २ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वितीये तु ततः स्थूलधारणातो जितं मनः ।
सर्वसाक्षिणि सर्वेशे विष्णौ धार्यतिमितीर्यते ॥ ४ ॥

दृश्यालम्बनरूपैवमुक्ता वैराजधारणा ।
इहोच्यते तु तत्साध्या सर्वान्तर्यामिधारणा ॥ ५ ॥

शुकेन परीक्षितं प्रति हृदयकमले भगवदुपासनाप्रकारतत्फलयोः कथनम् ॥ १ ॥ तथा जीवस्य देहादुत्क्रान्तिप्रकारस्य कथनम् ॥ २ ॥ भगवत्प्रसादार्थं भक्तिविरक्तिभगवच्चरित्रश्रवणकीर्तनादीनां अत्यवश्यकर्तव्यत्वस्य कथनम् ॥ ३ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

तृतीये विष्णुभक्तेस्तु वैशिष्ट्यं शृण्वतो मुनेः ।
भक्त्युद्रेकेण तत्कर्मश्रवणादर ईर्यते ॥ ६ ॥

शुकेन परीक्षितं प्रति इतरदेवताभजनस्य अल्पास्थिरैहिकफलमात्रसाधनत्वेन हरिभक्तेरेव निखिलपुरुषार्थसाधनत्वकथनम् ॥ १ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

तुर्ये परीक्षिता पृष्टं सृष्ट्यादिहरिचेष्टितम् ।
शुकेन ब्रह्मतत्पुत्रसंवादेनोपवर्ण्यते ॥ ७ ॥

शुकोपदेशेन दृढतरं वैराग्यं प्राप्तवता परीक्षिता शुकंप्रति भगवतः जगत्सृष्ट्यादिप्रकारनिरूपणप्रार्थना ॥ १ ॥ शुकेन भगवन्नमनपूर्वकं ब्रह्मनारदसंवादकथनमुखेन तन्निरूपणम् ॥ २ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे नारदेनाथ पृष्टः सृष्ट्यादि वक्त्यजः ।
हरेर्लीलां विराट्सृष्टिं कालकर्मादिशक्तिभिः ॥ ८ ॥

नारदेन चतुर्मुखंप्रति जगत्सृष्ट्यादिप्रकारकथनप्रार्थना ॥ १ ॥ ब्रह्मणा नारदं प्रति नारायणप्रणामपूर्वकं तदनुग्रहेणैव स्वस्य स्रष्टृत्वादिशक्तिसद्भावकथनपूर्वकं तत्त्वसृष्टिनिरूपणम् ॥ २ ॥ अण्डसृष्टिकथनपूर्वकं अण्डान्तर्भगवदवयवैश्चतुर्दशलोककल्पनकथनम् ॥ ३ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठे विराड्विभूतिश्च प्रोक्ताऽध्यात्मादिभेदतः ।
दृढीकृतं च पूर्वोक्तं सर्वं पुरुषसूक्ततः ॥ ९ ॥

ब्रह्मणा नारदं प्रति पुरुषसूक्तोक्तप्रकारेण भगवन्मुखादिभ्य इन्द्रियाणां तदभिमानिदेवानां चोत्पत्तिप्रकारनिरूपणम् ॥ १ ॥ तथा भगवदवयवेभ्यो यज्ञसाधनकुशादिसंभवकथनपूर्वकं प्राधान्येन भगवदवतारचरित्रनिरूपणप्रतिज्ञानम् ॥ २ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

सप्तमे भगल्लीलावतारा ब्रह्मणोदिताः ।
नारदाय तु तत्कर्मप्रयोजनगुणैः सह ॥ १० ॥

ब्रह्मणा नारदं प्रति संक्षेपेण भगवतो वराहादिनानावतारचरित्रकथनम् ॥ १ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमे देहसंबन्धमाक्षिपन्नीशजीवयोः ।
बहून्परीक्षिदापृच्छत्पुराणार्थान्बुभुत्सितान् ॥ ११ ॥

परीक्षिता शुकं प्रति जीवेशयोर्देहसंबन्धाद्यनेकप्रश्नकरणम् ॥ १ ॥

## नवमोऽध्यायः ॥ ९ ॥

राजप्रश्नोत्तरं वक्ष्यन्ब्रह्मणे हरिणोदितम् ।
कथयामास नवमे शुको भागवतं पुनः ॥ १२ ॥

एवं परीक्षिता पृष्टेन शुकेन भगवता ब्रह्मणे प्रोक्तस्य श्रीभागवतस्य परीक्षितं प्रति कथनम् ॥ १ ॥

## दशमोऽध्यायः ॥ १० ॥

ततो भागवतव्याख्याद्वारैव दशमे स्फुटम् ।
राजप्रश्नोत्तरं वक्तुमारेभे बादरायणिः ॥ १३ ॥

शुकेन परीक्षितं प्रति भागवतदशलक्षणीलक्षणकथनम् ॥ १ ॥ पूर्वोक्तायाः सृष्ट्याः पुनः प्रपञ्चनम् ॥ २ ॥ तृतीयस्कन्धे पाद्मकल्पनिरूपणप्रतिज्ञानम् ॥ ३ ॥ शौनकेन विदुरमैत्रेयसंवादप्रकारं पृष्टेन सूतेन तं प्रति शुकेन परीक्षितं प्रत्युक्तस्य संवादस्य कथनप्रतिज्ञानम् ॥ ४ ॥

इति द्वितीयः स्कन्धः ॥ २ ॥

श्रीगोपालकृष्णाय नमः ।

# तृतीयः स्कन्धः ॥ ३ ॥

तृतीये तु त्रयस्त्रिंशदध्यायैः सर्गवर्णनम् । ईशेच्छया गुणक्षोभात्सर्गो ब्रह्माण्डसम्भवः ॥ १ ॥

## प्रथमोऽध्यायः ॥ १ ॥

तत्र तु प्रथमेऽध्याये बन्धून्हित्वा गतायुरः ।
निर्गतस्योद्धवेनादौ संवादः क्षत्तुरुच्यते ॥ २ ॥

विदुरमैत्रेयसंवादमुखेन सृष्टिं विस्तरशः कथयन् शुकाचार्यः परीक्षितं प्रति विदुरस्य मैत्रेयेण समागमं प्रपञ्चयति ॥ १ ॥ दुर्योधनामत्कृतेन विदुरेण तीर्थयात्रार्थं प्रभासक्षेत्रगमनम् ॥ २॥ ततो यमुनां गतस्य तस्य तत्रोद्धवस्य दर्शनम् ॥ ३ ॥ विदुरेण तं प्रति द्वारकाजनकुशलप्रश्नः ॥ ४ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वितीये कृष्णविश्लेषादनुशोचन्नथोद्धवः ।
क्षत्त्रे बालचरित्राणि कृष्णस्यावर्णयच्छ्रुमन् ॥ ३ ॥

उद्धवेन विदुरं प्रति श्रीकृष्णस्य भूलोकत्यागकथनम् ॥ १ ॥ कृष्णस्य चरित्राणि स्मृत्वा तस्य बाल्यचरित्रकथनम् ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

तृतीये मथुरामेत्य व्रजात्कंसवधादिकम् ।
यत्कृतं द्वा॰कायां च कृष्णेन तदवर्णयत् ॥ ४ ॥

उद्धवेन विदुरंप्रति संग्रहेण श्रीकृष्णचरित्रकथनम् ॥ १ ॥ श्रीकृष्णाज्ञया यादवानां प्रभासतीर्थगमनकथनम् ॥ २ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थे बन्धुनिधनं श्रुत्वाऽऽत्मज्ञानलब्धये ।
उद्धवस्योपदेशेन क्षत्ता मैत्रेयमागमत् ॥ ५ ॥

मदिरापानमत्तानां यदूनां परस्परं मर्मोक्तिकथनेन क्रोधमुत्पाद्य परस्परेण हत्वा निःशेषं मारणम् । ॥ १ ॥ तदा श्रीकृष्णेन सरस्वतीतीरे किंचिद्वृक्षमूलाश्रयणेन तत्रागतमुद्धवं प्रति मैत्रेयसमक्षं दिव्यज्ञानोपदेशः ॥ २ ॥ ततो निर्गतेनोद्धवेन विदुरं प्रति यदुकुलक्षयनिवेदनपूर्वकं स्वस्य बदरिकाश्रमगमनोद्यमनिवेदनम् ॥ ३ ॥

विदुरेण स्वस्य ज्ञानोपदेशं प्रार्थितेन उद्धवेन "श्रीकृष्णाज्ञया तत्र मैत्रेयो ज्ञानोपदेशं करिष्यति इत्युक्त्वा बदरिकाश्रमगमनम् ॥ ४ ॥ ततो यादवनाशं श्रीकृष्णस्य वैकुण्ठगमनं च श्रुतवता विदुरेण मैत्रेयदिदृक्षया गङ्गातीरगमनम् ॥ ५ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे भगवल्लीलां क्षत्त्रा पृष्टो महामुनिः ।
प्रोवाच महदादीनां सर्गं तैश्च हरेः स्तुतिम् ॥ ६ ॥
उक्तश्चतुर्भिरध्यायैः क्षत्तुर्मैत्रेयसंगमः ।
संवादस्तु तयोः स्कन्धद्वयेनाथ निगद्यते ॥ ७ ॥

विदुरेण गङ्गाद्वारमेत्य मैत्रेयं प्रति स्वस्य ज्ञानोपदेशप्रार्थना ॥ १ ॥ भगवता ब्रह्माण्डाद्बहिः वटपत्रे शयानेन महदादितत्त्वानां तदभिमानिदेवानां च सृष्टिकथनम् ॥ २ ॥ तैर्देवैरण्डसृष्टावसामर्थ्याद्भगवन्तं प्रति स्तवनपूर्वकं अण्डसृष्टिप्रार्थना ॥ ३ ॥ अयं पुराणस्य दशलक्षण्यन्तर्भूतः सर्गः ।

इत आरभ्य चतुर्थस्कन्धसमाप्त्यवधि विदुरमैत्रेययोः संवादः कथ्यते ।

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठे तैरीश्वराविष्टैः सृष्टिमाह विराट्तनोः ।
अधिदैवादिभेदं च तत्रैव भगवत्कृतम् ॥ ८ ॥

भगवता स्वतत्त्वांशैरण्डसर्जनपूर्वकं तत्र विराट्पुरुषसर्जनम् ॥ १ ॥ इन्द्रियतदभिमानिदेवतानां तद्विषयाणां च सर्जनम् ॥ २ ॥ अयमपि सर्गान्तर्भूतः ।

## सप्तमोऽध्यायः ॥ ७ ॥

सप्तमे संशयच्छेदि प्रतिनन्द्य मुनेर्वचः ।
पुनः क्षत्त्रा कृता नानाप्रश्नाः सम्यगुदीरिताः ॥ ९ ॥

विदुरेण मैत्रेयं प्रति चतुर्मुखब्रह्मकर्तृकप्रजापतिमनुमन्वन्तरादिसृष्ट्यादिविषयकनानाप्रश्नाः ॥ १ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमे समभूद्ब्रह्मा नाभेस्तु जलशायिनः ।
तमजानञ्जलेऽविश्य तपसाऽतोषयद्विभुम् ॥ १० ॥

मैत्रेयेण विदुरप्रश्नानां उत्तरदानोपक्रमः ॥ १ ॥ अण्डोदके शेषभोगे शयानेन श्रीनारायणेन स्वनाभावुद्भूतपद्मोत्पादनपूर्वकं तत्र चतुर्मुखसर्जनम् ॥ २ ॥ ब्रह्मणा स्वोत्पादकस्य परिज्ञानाय तपश्चरणम् ॥ ३ ॥ ततो वर्षशतावसाने शेषशायिनो नारायणस्य स्वहृदये निरीक्षणम् ॥ ४ ॥

## नवमोऽध्यायः ॥ ९ ॥

नवमे तपसा तुष्टं दृष्ट्वा नारायणं त्वजः ।
अस्तौदेकार्णवे सीदँल्लोकसर्गचिकीर्षया ॥ ११ ॥

ततश्चतुर्मुखेन बहुधा श्रीनारायणस्तवनम् ॥ १ ॥ तपस्तुष्टेन विष्णुना चतुर्मुखं प्रति पुनस्तपश्चर्यया विज्ञानं लब्ध्वा जगत्सर्जनं कुर्विति चोदनापूर्वकमन्तर्धानम् ॥ २ ॥

## दशमोऽध्यायः ॥ १० ॥

दशमे कालसंप्रश्नं प्रतिवक्ति तदुद्भवः ।
प्राकृतादिविभागेन सर्गस्तु दशधोच्यते ॥ १२ ॥

विरिञ्चेन पुनस्तपश्चरणेन विज्ञानं लब्ध्वा अण्डोदकपानेन स्वाधिष्ठानभूतपद्मेन लोकत्रयसर्जनचिन्तनम् ॥ १ ॥ तत्र ब्रह्माण्डे विरिञ्चेन चराचरात्मकप्राकृतवैकृतात्मना दशविधनानाप्रपञ्चसर्जनम् ॥ २ ॥

## एकादशोऽध्यायः ॥ ११ ॥

तत एकादशे कालः परमाण्वादिलक्षणैः ।
युगमन्वन्तरादिभ्यः कल्पमानादि वर्ण्यते ॥ १३ ॥

मैत्रेयेण विदुरं प्रति क्षणलवप्रभृतिपरार्धावधि-मन्वन्तरावान्तरप्रलयमहाप्रलयादिसकलकालनिरूपणम् ॥ १ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

द्वादशे तु कुमारादिमनःसर्गासमेधनात् ।
कायद्वैधेन यौनस्तु मनुसर्गोऽनुवर्ण्यते ॥ १४ ॥

ब्रह्मणा अविद्यासृष्टिः ॥ १ ॥ सनकादीनां रुद्रमरीच्यादीनां च सर्जनम् ॥ २ ॥ ऋगादिवेद-चतुष्टयसर्जनम् ॥ ३ ॥ स्वायंभुवमनोः शतरूपायाश्चोत्पत्तिः ॥ ४ ॥ अयं दशलक्षण्यन्तर्भूतो विसर्गः ।

## त्रयोदशोऽध्यायः ॥ १३ ॥

त्रयोदशे सिसृक्षायां मनोराकस्मिकाद्भुताम् ।
धरामुद्धर्तुमुद्भूतात्क्रोडाद्दैत्यानुसूदनम् ॥ १५ ॥

ब्रह्मणा प्रजासृष्टिमादिष्टेन स्वायंभुवेन तं प्रति सलिलनिमग्नधरणीसमुद्धरणप्रार्थना ॥ १ ॥ ब्रह्मणो नासाविवरान्निर्गतेन वराहरूपिणा हरिणा हिरण्याक्षहननपूर्वकं धरणीसमुद्धरणम् ॥ २ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

चतुर्दशे निदानं तु तद्वधे वक्तुमुच्यते ।
संध्यायां कश्यपाद्गर्भसंभवः कामतो दितेः ॥ १६ ॥

विदुरेण मैत्रेयंप्रति हिरण्याक्षवधकारणप्रश्नः ॥ १ ॥ अदित्याः कश्यपादसमये सन्ध्याकाले गर्भधारणादिकथाकथनम् ॥ २ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

हतप्रभैः सुरैः पृष्टः प्राह पञ्चदशे विधिः ।
तद्बीजं विप्रशापादि वैकुण्ठे विष्णुभृत्ययोः ॥ १७ ॥

दितिगर्भतेजसा हतालोके लोके देवैः प्रार्थितेन ब्रह्मणा तान्प्रति तत्कारणकथनोपक्रमः ॥ १ ॥ कदाचन सनकादीनां वैकुण्ठगमनम् ॥ २ ॥ वैकुण्ठवर्णनम् ॥ ३ ॥ भगवन्मन्दिरं प्रविशतां तेषां जयविजयाभ्यां निरोधः ॥ ४ ॥ क्रुद्धैः सनकादिभिः जयविजययोरासुरजन्मप्रापकशापदानम् ॥ ५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

हरिणा सान्त्वितैर्विप्रैरद्भुतसैस्तु षोडशे ।
तयोरसुरभावेऽपि कृतोऽनुग्रह ईर्यते ॥ १८ ॥

भगवता श्रीनारायणेन सनकादीन्प्रति ब्राह्मणमहिमानुवर्णनपूर्वकं तदीयशापानुमोदनम् ॥ १ ॥ भगवता त्वरितमेव स्वसमीपगमनमादिष्टाभ्यां जयविजयाभ्यां वैकुण्ठादधःपतनम् ॥ २ ॥ एवं ब्रह्मणा पुरावृत्तनिवेदनपूर्वकं इदानीं दितिगर्भे प्रविष्टयोर्जयविजययोः भगवताऽचिरादेव वधो भविष्यतीति देवेभ्यः कथनम् ॥ ३ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

ततः सप्तदशे जन्म तयोर्लोकभयंकरम ।
हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतः ॥ १९ ॥

दितेर्जठराद्वर्षशतावसाने हिरण्यकशिपुहिरण्याक्षयोरुत्पत्तिः ॥ १ ॥ हिरण्याक्षेण दिग्विजयार्थं निर्गतेन युद्धाय वरुणाह्वानम् ॥ २ ॥ वरुणेन तं प्रति स्वस्य वृद्धत्वात् युद्धाय नारायणं प्रति गमनचोदना ॥ ३ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

अष्टादशे हिरण्याक्षवराहयोर्द्वयोः।
निर्विशेषं महायुद्धं देवक्षोभि निरूप्यते ॥ २० ॥

नारायणान्वेषिणा हिरण्याक्षेण नारदवचनाद्रसातलगमनम् ॥ १ ॥ तत्र धरणीहारिणा वराहरूपिणा हरिणा सह युद्धारंभः ॥ २ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

ऊनविंशे विरिञ्च्यादिप्रार्थितेन महात्मना।
वराहेण हिरण्याक्षवधः श्लाघ्योऽनुवर्ण्यते ॥ २१ ॥

भगवता हिरण्याक्षवधः ॥ १ ॥

## विंशोऽध्यायः ॥ २० ॥

विंशे वराहजन्मादिव्यवधानादथादितः।
सर्गोऽनुस्मार्यते वक्तुमन्वयं प्रस्तुतं मनोः ॥ २२ ॥

स्वायंभुवमनोः कथाया मध्ये प्रसक्तां भगवतो वराहावतारकथां हिरण्याक्षवधकथां च त्रयोदशाद्यूनविंशान्तैः सप्तभिरध्यायैः परिसमाप्य विदुरपश्चानुरोधेन मैत्रेयेण ब्रह्मकृतयक्षरक्षोगन्धर्वभूतपिशाचादिनानाजातिसृष्टेर्विस्तरेण कथनम् ॥ १ ॥

## एकविंशोऽध्यायः ॥ २१ ॥

एकविंशे तपोविद्यातोषितेन तु विष्णुना।
कर्दमस्य मनोः पुत्र्या विवाहघटनोच्यते ॥ २३ ॥

मध्ये त्रुटितां स्वायम्भुवमनुकथां वक्तुं विदुरप्रार्थितेन मैत्रेयेण तत्कथनारम्भः ॥ १ ॥ ब्रह्मणा प्रजासर्जनं चोदितेन कर्दमेन सरस्वतीतीरे भगवदुद्देशेन तपश्चरणम् ॥ २ ॥ अपरोक्षीभूतेन श्रीनारायणेन स्वायंभुवमनुपुत्र्या देवहूत्याः परिणये आज्ञादानम् ॥ ३ ॥ परेद्यवि भार्यया शतरूपया पुत्र्या देवहूत्या च सह स्वायंभुवमनोः कर्दमाश्रमगमनम् ॥ ४ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

द्वाविंशे कर्दमायाद्यथाऽऽदिष्टं हि विष्णुना।
मनुर्दुहितरं देवहूतिमित्युपवर्ण्यते ॥ २४ ॥

स्वायंभुवेन मनुना सोपचारं स्वपुत्रीपाणिग्रहणं प्रार्थितेन कर्दमेन सबहुमानं देवहूतीसमुद्वाहः॥ १ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

त्रयोविंशे ततो योगनिर्मिते सर्वसम्पदि।
विमाने कामगे चित्रा तयो रतिरुदीर्यते ॥ २५ ॥

ततश्चिरतरदुश्चरशुश्रूषया कर्शितनिजदेहां देवहूतिं प्रति तुष्टेन कर्दमेनाभीष्टवरणचोदना ॥ १ ॥ तया सुखविहरणपूर्वकमपत्योत्पादनं प्रार्थितेन तेन योगविभवेन दिव्यविमाननिर्माणपूर्वकं बिन्दुसरःस्नानमात्रेण दिव्यरूपवत्या योगप्रभावेण नव देहान्धारितवत्या देवहूत्या सह स्वयमपि नवधाऽऽत्मानं विभज्य कामगमं विमानमारुह्य नन्दनवनादिषु सुखेन विहरणं नवकन्योत्पादनं च ॥ २ ॥ ततः प्रव्रजिष्यन्तं तमपि विज्ञाय देवहूत्या पुमपत्योत्पादनप्रार्थना ॥ ३ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

चतुर्विंशे ततो जन्म कपिलस्याह तत्पितुः।
प्रव्रज्यां तमनुज्ञाप्य ऋणत्रयविमोक्षतः ॥ २६ ॥

कर्दमेन देवहूतिं समाश्वास्य तस्यां भगवदंशभूतकपिलनामकतनयोत्पादनम् ॥ १ ॥ ब्रह्मणा मरीच्यादिभिः सह कर्दमाश्रममेत्य कपिलकर्दमदेवहूतीनां प्रशंसनम् ॥ २ ॥ कर्दमेन ब्रह्मचोद-

नया मरीच्यादिभ्यो नवभ्यो महर्षिभ्यः स्वकन्यानवकप्रदानम् ॥ ३ ॥ कर्दमेन रहसि कपिलमेत्य प्रणामस्तवनपूर्वकं तदनुज्ञया यत्याश्रमं स्वीकृत्य वनं प्रति गमनम् ॥ ४ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

पञ्चविंशे जनन्या तु पृष्टो बन्धविमोचनम् ।
आदावाह परं भक्तिलक्षणं कपिलः सुतः ॥ २७ ॥

देवहूत्या कपिलं प्रति जीवानां बन्धमोक्षोपायकथनप्रार्थना ॥ १ ॥ कपिलेन भक्तियोगस्य तदुपायत्वकथने तया तं प्रति भक्तियोगनिरूपणप्रार्थना ॥ २ ॥ कपिलेन तां प्रति स्वमहिमानुवर्णनपूर्वकं भक्तियोगप्रशंसनम् ॥ ३ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

षड्विंशे पुंप्रकृत्योस्तु विवेकायोपवर्ण्यते ।
सांख्येन सर्वभावानां जन्म लक्षणभेदतः ॥ २८ ॥

धात्रा पुत्राय यत्प्रोक्तं क्षत्त्रे मित्रासुतेन च ।
मात्रे सांख्यं तदध्यात्म प्राधान्येनाह तत्त्ववित् ॥ २९ ॥

कपिलेन देवहूतिं प्रति तत्त्वलक्षणतदुत्पत्तिप्रकारादिकथनम् ॥ १ ॥ ब्रह्माण्डविराट्पुरुषेन्द्रियतदधिष्ठानाभिमानिविषयादिनिरूपणम् ॥ २ ॥ अन्वयव्यतिरेकाभ्यां क्षेत्रज्ञस्य विराड्देहोत्थापकत्वकथनम् ॥ ३ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

सप्तविंशे ततः सम्यग्बहुसाधनयोगतः ।
पुंप्रकृत्योर्विवेकेन मोक्षरीतिर्निरूप्यते ॥ ३० ॥

कपिलेन स्वमात्रे देवहूत्यै प्रकृतिपुरुषविवेकनिरूपणम् ॥ १ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

अष्टाविंशे ततोऽष्टाङ्गयोगेन ध्यानशोभिना ।
सर्वोपाधिविनिर्मुक्तं स्वरूपज्ञानमीर्यते ॥ ३१ ॥

भक्तिं संक्षेपतः प्रोच्य सांख्यमाख्याय विस्तृतम् ।
अथाह वैष्णवं योगमष्टाङ्गं कपिलो हरिः ॥ ३२ ॥

कपिलेन देवहूतिं प्रति अष्टाङ्गयोगनिरूपणम् ॥ १ ॥ भगवतः पादादिसर्वावयवध्यानप्रकारः ॥ २ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

एकोनत्रिंशके भक्तियोगस्तु बहुधोच्यते ।
कालस्य च बले घोरा संसृतिश्च विरक्तये ॥ ३३ ॥

कपिलेन देवहूतिं प्रति भक्तियोगनिरूपणम् ॥ १ ॥ तथा कालमहिमानुवर्णनम् ॥ २ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

त्रिंशे तु कायकान्तादिलालनाकुलचेतसाम् ।
कामिनां तामसी पापाद्धागतिरुदीर्यते ॥ ३४ ॥

कपिलेन देवहूतिं प्रति विरक्तिजननाय विषयासक्तानां नरकयातनाद्यनुभवप्रकारवर्णनम् ॥ १ ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

एकत्रिंशे विमिश्रैस्तु पुण्यपापैरिहान्तरा ।
मनुष्ययोनिसंप्राप्तिर्वर्ण्यते राजसी गतिः ॥ ३५ ॥

कपिलेन देवहूतिं प्रति जीवानां गर्भयातनादिकथनम् ॥ १ ॥ तथा स्त्रीसङ्गस्यानर्थहेतुत्वकथनम् ॥ २ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

द्वात्रिंशे सात्त्विकैर्धर्मैरूर्ध्वं गतिरुदीर्यते ।
तत्त्वज्ञानविहीनस्य ततश्च पुनरागतिः ॥ ३६ ॥

कपिलेन देवहूतिं प्रति काम्याकाम्यकर्मणोः फलकथनपूर्वकं भगवद्भजनचोदना ॥ १ ॥ तथा ज्ञानभक्तिवैराग्यादीनां भगवत्प्राप्त्युपायत्वोक्तिः ॥ २ ॥ तत्त्वोपदेशयोग्यायोग्यलक्षणप्रतिपादनम् ॥ ३ ॥

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

तु तस्यैव कपिलस्योपदेशतः ।
ज्ञानभावेन तन्मातुर्जीवन्मुक्तिरुदीर्यते ॥ ३७ ॥

कपिलोपदेशसमधिगतभगवज्ज्ञानया देवहूत्या कपिलस्तवनम् ॥ १ ॥ कपिलस्य निर्गमनम् ॥ २ ॥ देवहूत्या कपिलोपदिष्टमार्गेण भगवद्ध्यानपूर्वकं देहत्यागः ॥ ३ ॥ कपिलेन उदीचीं दिशमेत्य सुखविहरणम् ॥ ४ ॥

इति तृतीयः स्कन्धः ॥ ३ ॥

श्रीगोपालकृष्णाय नमः ।

# चतुर्थः स्कन्धः ॥ ४ ॥

अथैकत्रिंशताऽध्यायैर्विसर्गस्तुर्य उच्यते । विसर्गस्तत्राध्वरार्थानैर्ब्रह्ममन्वादिभिः कृतः ॥ १ ॥

## प्रथमोऽध्यायः ॥ १ ॥

तत्र तु प्रथमेऽध्याये मनुकन्यान्वयाः पृथक् ।
वर्ण्यन्ते यत्र यज्ञादिमूर्तिभिः प्रभवो हरेः ॥ २ ॥

स्वायंभुवमनुपुत्र्यां आकूत्यां यज्ञनामकभगवदवतारः ॥ १ ॥ देवहूतिपुत्रीणां नवानां वंशकथनम् ॥ २ ॥ अनसूयायां दत्तात्रेयावतारः ॥ ३ ॥ तृतीयायाः मनुपुत्र्याः प्रसूत्या वंशकथनम् ॥ ४ ॥ मूर्तिनाम्न्यां नरनारायणोत्पत्तिः ॥ ५ ॥ सतीनाम्न्या रुद्रभार्यायाः स्वभर्तृद्विषि पितरि दक्षे कोपेन योगमार्गेण देहत्यागः ॥ ६ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वितीये प्रथमाध्यायोपक्षिप्तभवदक्षयोः ।
विद्वेषे वर्ण्यते हेतुर्विश्वसृग्यज्ञसम्भवः ॥ ३ ॥

रुद्रदक्षयोर्द्वेषकारणकथनारम्भः ॥ १ ॥ विश्वसृजां सत्रं प्रति दक्षस्यागमनम् ॥ २ ॥ तत्र पूर्वमागतेन तज्जामात्रा रुद्रेण तस्मै प्रत्युत्थानाद्यकरणात्क्रोधेन तं विनिन्द्य शप्त्वा च दक्षस्य बहिर्गमनम् ॥ ३ ॥ नन्दीश्वरेण दक्षादिब्राह्मणानां प्रतिशापे दत्ते रुद्रेण यज्ञशालातो बहिर्गमनम् ॥ ४ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

तृतीये तु सती तातयज्ञोत्सवदिदृक्षया ।
गमिष्यन्ती महेशानवारिता नानाहेतुभिः ॥ ४ ॥

स्वपितुर्दक्षस्य बृहस्पतिसवनामकक्रतुं प्रति गन्तुं सत्या प्रार्थितेन रुद्रेण सहेतुकं गमननिवारणम् ॥ १ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थे तु पतिं हित्वा गता पित्राऽवमानिता ।
रुषा निर्भर्त्स्य तं यज्ञे जहौ देहमितीर्यते ॥ ५ ॥

स्वभर्त्राज्ञां विनापि सतीदेव्या दक्षाध्वरं प्रति गमनम् ॥ १ ॥ तत्र पित्रवमानितया तया अरुद्रभा-

2010

गक्रतुं निरीक्ष्य क्रोधेन स्वभर्तृप्रशंसनपूर्वकं दक्षं विनिन्द्य योगमार्गेण स्वदेहत्यागः ॥ २ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे तु सतीदेहत्यागमाकर्ण्य शङ्करः ।
वीरभद्रं रुषोत्पाद्य तेन दक्षमघातयत् ॥ ६ ॥

सतीदेहत्यागं श्रुतवता शंकरेण रुषा स्वजटातो वीरभद्रमुत्पाद्य तेन दक्षघातनम् ॥ १ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठे तु देवसंघेन सह गत्वा भवं विधिः ।
सान्त्वयामास दक्षादिजीविनार्थमादरात् ॥ ७ ॥

देवैर्विनिवेदितदक्षनाशेन विरिञ्चिना दक्षादिजीवनार्थं रुद्रं सान्त्वयितुं देवैः सह कैलासगमनम् ॥ १ ॥ कैलासवर्णनम् ॥ २ ॥ शिववर्णनम् ॥ ३ ॥ ब्रह्मणा रुद्रस्तुतिः ॥ ४ ॥ दक्षादीनां जीवनप्रार्थना ॥ ५ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

सप्तमे विष्णुरुद्भूतः स्तुतो दक्षभवादिभिः ।
यज्ञं प्रवर्तयामास दक्षेणेति निरूप्यते ॥ ८ ॥

परितुष्टेन शङ्करेण सह ब्रह्मादिदेवानां दक्षाध्वरगमनम् ॥ १ ॥ दक्षादीनां रुद्रानुग्रहेण शिरआद्यवयवप्राप्तिः ॥ २ ॥ तत्र यज्ञकुण्डात्प्रादुर्भूतस्य विष्णोः दक्षादिभिरनेकैः कृता स्तुतिः ॥ ३ ॥ अवभृथस्नानानन्तरं देवानां स्वस्वस्थानगमनम् ॥ ४ ॥ मैत्रेयेण विदुरं प्रति यज्ञकथाश्रवणफलकथनम् ॥ ५ ॥ [सतीदेव्याः पार्वतीत्वेनावतारस्य तस्यां सुब्रह्मण्योत्पत्तेश्च कथनम् ॥ ६ ॥]

## अष्टमोऽध्यायः ॥ ८ ॥

दक्षकन्यान्वये प्रोक्ता दक्षयज्ञकथोदिता ।
मनुपुत्रान्वये प्रोक्ता ध्रुवचर्याऽथ पञ्चभिः ॥ ९ ॥

स्वायंभुवमनुपुत्र्याः प्रसूत्या वंशकथनावसरे प्राप्तां सतीदेव्याः तद्भर्तुः शङ्करस्य, तत्पितुर्दक्षस्य, तद्यज्ञस्य च कथां समाप्य ब्रह्मपुत्रस्याधर्मस्य वंशकथनम् ॥ १ ॥ स्वायंभुवमनुपुत्रस्योत्तानपादस्य अन्वयकथनप्रसङ्गेन एतदादिद्वादशाध्यायान्तैः पञ्चभिरध्यायैस्तत्पुत्रस्य ध्रुवस्य चरित्रं कथ्यते ॥ २ ॥ मातुः सपत्न्या दुरुक्त्यवमानितेन ध्रुवेण तपसे वनगमनम् ॥ ३ ॥ तत्र नारदोपदिष्टप्रकारेण ध्रुवेण भगवदाराधनम् ॥ ४ ॥

## नवमोऽध्यायः ॥ ९ ॥

नवमे तु हरिं स्तुत्वा लब्ध्वा तस्माद्वरान्ध्रुवः ।
प्रत्यागत्याकरोद्राज्यं पित्रा दत्तमिनीर्यते ॥ १० ॥

ध्रुवतपसा तुष्टस्य भगवतो मधुवनगमनं ध्रुवाय वरदानं च ॥ १ ॥ वनान्नगरमागतस्य ध्रुवस्य पित्रा उत्तानपादेन राज्ये पट्टाभिषेकः ॥ २ ॥

## दशमोऽध्यायः ॥ १० ॥

दशमे भ्रातृहन्तॄणां यक्षाणामकरोद्वधम् ।
एक एवालकां गत्वेत्यस्य विक्रम उच्यते ॥ ११ ॥

ध्रुवस्य विवाहः पुत्रोत्पत्तिश्च ॥ १ ॥ ध्रुवस्य वैमात्रेयभ्रातुरकृतोद्वाहस्य मृगयार्थं वनं गतस्योत्तमनाम्नो यक्षैर्वधः ॥ २ ॥ ध्रुवेण अलकां गत्वा तद्भ्रातृहन्तॄणां यक्षाणां वधः ॥ ३ ॥

## एकादशोऽध्यायः ॥ ११ ॥

एकादशे तु यक्षाणां क्षयं दृष्ट्वा मनुः स्वयम् ।
आगत्य वारयामास ध्रुवं तत्त्वोपदेशतः ॥ १२

स्वायंभुवमनुना स्वपौत्रकृतयक्षवधं ज्ञात्वा ध्रुवमकाशमेत्य तस्य भगवत्तत्त्वोपदेशं कृत्वा युद्धान्निवारणम् ॥ १ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

द्वादशे धनदेनाभिनन्दितः पुरमागतः ।
यज्ञैरिष्ट्वा हरेः स्थानमारुरोहेति कीर्त्यते ॥ १३ ॥

युद्धान्निवृत्तस्य ध्रुवस्यार्जवं दृष्ट्वा तुष्टेन कुबेरेण तदभिनन्दनम् ॥ १ ॥ ततः पुरमागत्य षट्त्रिंशत्सहस्रवर्षाणि राज्यपालनम् ॥ २ ॥ ततो जातवैराग्येण तेन विशालायां तपस्तप्त्वा विष्णुपदप्राप्तिः ॥ ३ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

एवं पञ्चभिरध्यायैर्ध्रुवचर्याऽनुवर्णिता ।
अथैकादशभिश्चित्रं पृथुचारित्रमुच्यते ॥ १४ ॥
तत्र त्रयोदशे वक्तुं पृथोर्जन्म ध्रुवान्वये ।
अङ्गो वेनपिता पुत्रदौर्यात्मि इतीर्यते ॥ १५ ॥

ततो ध्रुववंशकथनप्रसंगेन तद्वंश्यस्य अङ्गराजस्य वेननामकपुत्रोत्पत्तिकथनम् ॥ १ ॥ स्वपुत्रदौर्शील्यनिर्विण्णेनाङ्गराजेन रात्रावलक्षितं वनगमनम् ॥ २ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

चतुर्दशे तु दुष्पुत्रभयादङ्गे गते द्विजैः ।
अभिषिक्तस्य वेनस्य रोषात्तद्वध उच्यते ॥ १६ ॥

अराजकभयात्रस्तैर्भृग्वादिमुनिभिर्वेनस्य पट्टाभिषेकः ॥ १ ॥ अधर्मे प्रवृत्तस्य वेनस्य ऋषिभिर्हुंकारेण हननम् ॥ २ ॥ पुना राज्यस्याराजकत्वाच्चोरेभ्यो लोकस्य भयोत्पत्तिः ॥ ३ ॥ मृतस्य वेनस्य ऊरुमथनान्निषादोत्पत्तिः ॥ ४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

ततः पञ्चदशे विप्रैर्मथनाद्बाहुतः ।
जातस्य तु पृथोरुक्तमभिषेकार्हणादिकम् ॥ १७ ॥

विप्रैः पुनः पुत्रोत्पत्त्यर्थं वेनबाह्वोर्मथनेन पृथुनामकस्य भगवदंशस्य पुत्रस्य अर्चिर्नाम्न्या महालक्ष्म्यंशभूतायाः पुत्र्याश्चोत्पत्तिः ॥ १ ॥ तां भार्यांकृतवतः पृथोः पट्टाभिषेकः ॥ २ ॥ तस्मै दातुं देवैर्र्हणाहरणम् ॥ ३ ॥ तं स्तोतुमुपक्रान्तान्सूतादीन्स्वस्तवनान्निवारणम् ॥ ४ ॥

## षोडशोऽध्यायः ॥ १६ ॥

षोडशे सर्वलोकेशैः सत्कृतं भार्यया युतम् ।
मुनिप्रयुक्ताः सूताद्याः स्तुवन्ति स्मेति कीर्त्यते ॥ १८ ॥

सूतमागधादिभिर्मुन्युपदिष्टमार्गेण पृथोः वृत्तवर्तिष्यमाणमहिमानुवर्णनम् ॥ १ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

ततः सप्तदशे लोकक्षुधाः प्रशमयन्पृथुः ।
ग्रस्तबीजां महीं हन्तुं यत्तो भीतया तया स्तुतः ॥ १९ ॥

अन्नाभावात्प्रजासु क्षुधापीडितासु पृथुना तत्कारणं ज्ञात्वा उप्तानि बीजानि ग्रसन्त्या आत्मरुद्धानि बीजानि बहिरमुञ्चन्त्याश्च भूमेर्हननोद्यमः ॥ १ ॥ भीतया भूम्या पृथोः स्तुतिः ॥ २ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

अष्टादशे महीवाक्याद्वत्सपात्रादिभेदतः ।
पृथ्व्यादिभिस्तु सा दुग्धा स्वं स्वं दुग्धमितीर्यते ॥ २० ॥

भूदेव्युक्तोपायेन पृथुराजप्रभृतिभिः वत्सपात्रादिभेदेन क्रमशः स्वस्वाभीष्टपदार्थानां धरित्र्या दोहनम् ॥ १ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

ऊनविंशेऽश्वमेधाङ्गहयापहरणात्पृथोः ।
इन्द्रं हन्तुं प्रवृत्तस्य धात्रा वारणमुच्यते ॥ २१ ॥

पृथुचक्रवर्तिना शताश्वमेधकरणारंभः ॥ १ ॥ चरममश्वमेधं कुर्वाणे पृथौ इन्द्रेण अमृष्यया यज्ञियाश्वहरणम् ॥ २ ॥ इन्द्रं हन्तुं प्रवृत्तस्य पृथोः ब्रह्मणा निवारणम् ॥ ३ ॥

## विंशोऽध्यायः ॥ २० ॥

विंशे तु विष्णुना साक्षात्पृथोर्येऽनुशासनम् ।
वरदानप्रसङ्गेन प्रीतिश्चान्योन्यमीर्यते ॥ २२ ॥

साक्षाद्विष्णुना पृथुराजाय ज्ञानोपदेशः ॥ १ ॥ स्वकृतापराधं क्षमापयता मघवता सह प्रीतिं प्राप्य तस्य विसर्जनम् ॥ २ ॥ भगवत्स्तुतिः ॥ ३ ॥ भगवतो वैकुण्ठगमनम् ॥ ४ ॥

## एकविंशोऽध्यायः ॥ २१ ॥

एकविंशे तु पृथुना प्रजानामनुशासनम् ।
महासत्रे सुरादीनां महासदसि वर्ण्यते ॥ २३ ॥

पृथुना प्रजाभ्यो धर्मोपदेशः ॥ १ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

द्वाविंशे तु परं ज्ञानं पृथवे हरिशासनात् ।
सनत्कुमारो भगवानुपादिशदितीर्यते ॥ २४ ॥

सनत्कुमारेण पृथुराजाय ज्ञानोपदेशः ॥ १ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

त्रयोविंशे सभार्यस्य वने नित्यसमाधितः ।
विमानमधिरुह्याथ वैकुण्ठगतिरीर्यते ॥ २५ ॥

सभार्येण पृथुना वने तपश्चरणम् । मृतस्य भर्तुः अग्निप्रदानपूर्वकं पत्न्याः सहगमनम् ॥ १ ॥ तयोर्विमानमधिरुह्य वैकुण्ठगमनम् ॥ २ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

एकादशभिरध्यायैः पृथोश्चरितमीरितम् ।
प्रचेतसामथाध्यायैस्तन्मध्ये पञ्चभिः पितुः ॥ २६ ॥
चतुर्विंशे प्रपौत्रात्तु पृथोः प्राचीनबर्हिषः ।
प्रचेतसां जनिस्तेभ्यो रुद्रगीतं च वर्ण्यते ॥ २७ ॥

पृथुवंशोत्पन्नस्य प्राचीनबर्हिषः कथारंभः ॥ १ ॥ प्राचीनबर्हिःपुत्राणां पित्रा प्रजासर्गे आदिष्टानां प्रचेतसां श्रीरुद्रेण भगवन्महिमोपदेशः ॥ २ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

प्रचेतस्सु तपस्यत्सु तत्पित्रे नारदो घृणी ।
प्राचीनबर्हिषेऽध्यात्मं पारोक्ष्येणाह पञ्चभिः ॥ २८ ॥
पुरञ्जनकथाव्याजात्पञ्चविंशे तु नारदः ।
आत्मनो बुद्धिसङ्गेन विविधामाह संसृतिम् ॥ २९ ॥

प्रचेतोभिः रुद्रोपदिष्टमार्गेण भगवन्तमुद्दिश्य तपश्चरणम् ॥ १ ॥ एतस्मिन्नन्तरे नारदस्य प्राचीनबर्हिषः समीपगमनम् ॥ २ ॥ नारदेन प्राचीनबर्हिषे कर्ममार्गापेक्षया ज्ञानमार्गः श्रेष्ठ इत्युपदेशार्थं पुरंजनोपाख्यानकथनारंभः ॥ ३ ॥ पुरंजनस्य कामभोगकथाकथनम् ॥ ४ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

षड्विंशे मृगयाव्याजात्स्वप्नजागरणोक्तितः ।
सद्बुद्धित्यागयोगाभ्यां संसृतिः सा प्रपञ्च्यते ॥३०॥

पुरंजनस्य मृगयार्थं वनगमनम् ॥ १ ॥ वनान्निवृत्तेन तेन क्रुद्धायाः स्वमहिष्याः सान्त्वनम् ॥ २ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

सप्तविंशे प्रियापुत्राद्यासक्तया विस्मृतात्मनः ।
कालकन्याद्युपाख्यानैर्जरारोगाद्युदीर्यते ॥ ३१ ॥

महिष्या रममाणस्य भगवन्तं विस्मृतवतः पुरंज-नस्य जराप्राप्तिः ॥ १ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

अष्टाविंशे तु वैदर्भ्याख्यानेन स्त्रीविचिन्तया ।
स्त्रीत्वं प्राप्तस्य दैवेन कदाचिन्मुक्तिरुच्यते ॥ ३२ ॥

जराग्रस्तस्य स्वीयदारापत्यादीन्प्रति शोचतः पुरञ्जनस्य मरणसमयप्राप्तिः ॥ १ ॥ परलोके नरकयातनानुभवानन्तरं पुरंजनस्य अन्यजन्मनि विदर्भदेशे स्त्रीत्वेन जननम् ॥ २ ॥ स्त्रीभूतस्य पुरंजनस्य भगवज्ज्ञानप्राप्त्या मोक्षप्राप्तिः ॥ ३ ॥

## ऊनत्रिंशोऽध्यायः ॥ २९ ॥

ऊनत्रिंशे परोक्षार्थव्याख्यानेनोपसंहृतम् ।
स्त्रीसंगतो भवस्त्वीशसंगान्मुक्तिरिति स्फुटम् ॥ ३३ ॥

पूर्वोक्तप्रमेयस्य दुर्बोधत्वात्तत्स्पष्टीकरणार्थं प्राचीनबर्हिषा प्रार्थितेन नारदेन तद्विवरणम् ॥ १ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

प्रसंगात्पञ्चभिः प्रोक्तं वृत्तं प्राचीनबर्हिषः ।
वर्ण्यते च पुनर्द्वाभ्यां प्रस्तुतं तत्प्रचेतसाम् ॥ ३४ ॥
तत्र त्रिंशे तपस्तुष्टादीशाल्लब्धवरास्ततः ।
आगत्य वार्क्षीमुद्वाह्य राज्यं चक्रुरितीर्यते ॥ ३५ ॥

मध्ये प्राप्तप्राचीनबर्हिःकथासमापनानन्तरं प्रचेतसां कथाकथनम् ॥ १ ॥ रुद्रोक्तमार्गेण भगवन्तं तोषयतां तेषां भगवतः प्रादुर्भावः ॥ २ ॥ भगवदाज्ञानुसारेण तेषां मारिषानामककन्याविवाहः तस्यां दक्षनामकपुत्रोत्पादनं च ॥ ३ ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

एकत्रिंशे सुते दक्षे धुरं न्यस्य वने सताम् ।
नारदोक्तेन मार्गेण मुक्तिरुक्ता प्रचेतसाम् ॥ ३६ ॥

प्रचेतोभिः स्वकुटुंबभारं स्वपुत्रे दक्षे विन्यस्य गृहात्प्रव्रजनम् ॥ १ ॥ समुद्रतीरे तपस्यतां तेषां नारदोपदेशः तेषां मोक्षप्राप्तिश्च ॥ २ ॥

इति चतुर्थः स्कन्धः ॥ ४ ॥

श्रीगोपालकृष्णाय नमः ।

# पञ्चमः स्कन्धः ॥ ५ ॥

अथातः पञ्चमस्कन्धो व्याख्यानेकविशेषवान् । प्रियव्रतान्वयो यत्र सप्रपञ्चः प्रपञ्च्यते ॥ १ ॥
षड्विंशत्याधुनाऽध्यायैः पञ्चमे स्थानमीर्यते । लोकद्वीपादिमर्यादा पालनाख्यमनेकधा ॥ २ ॥
पृथिव्युपर्यधोलोकैर्मर्यादा त्रिविधा मता । पुनश्चैकैकशस्तेषु मर्यादा बहुधा मता ॥ ३ ॥
भुवि द्वीपादिमर्यादाः पाल्यन्ते राजभिः पृथक् । भूमेरुपरि देवाद्यैस्ततश्चाधोऽसुरादिभिः ॥ ४ ॥
तत्राध्यायैस्तु विंशत्या प्रियव्रतपुरःसरैः । भुवि द्वीपादिमर्यादाः पालिता इति वर्ण्यते ॥ ५ ॥
त्रिभिः सूर्यादिभिर्ज्योतिश्चक्रादिष्विति कीर्त्यते । अतलादिषु दैत्याद्यैः पालनं च ततस्त्रिभिः ॥ ६ ॥

## प्रथमोऽध्यायः ॥ १ ॥

तत्र तु प्रथमेऽध्याये ज्ञानिनो राज्यनिर्वृतिः ।
पुनश्च ज्ञाननिष्ठेति प्रियव्रतकथाऽद्भुता ॥ ७ ॥
वंशः प्रियव्रतस्यापि निबोध नृपसत्तम ! ।
यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ।
भुक्त्वा विभज्य पुत्रेभ्य ऐश्वरं समगात्पदम् ॥ ८ ॥

पूर्वस्मिस्कन्धे मनुपुत्रस्योत्तानपादस्य कथा तद्वंशावलिश्चोक्ता । अस्मिस्कन्धे तज्ज्येष्ठभ्रातुः प्रियव्रतस्य कथोच्यते ॥ १ ॥ अस्मिन्नध्याये राज्यमनिच्छतः प्रियव्रतस्य ब्रह्मण आदेशेन राज्याङ्गीकरणम् ॥ २ ॥ तस्य आग्नीध्रादिपुत्रोत्पत्तिः ॥ ३ ॥ तेन भूमण्डले सप्तकृत्वः प्रदक्षिणीकरणेन जम्ब्वादिसप्तद्वीपान्सप्तवारिधींश्च परिकल्प्य आग्नीध्रादिभ्यः सप्तभ्यः पुत्रेभ्यो दानम् ॥ ४ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वितीये प्रोक्तमाग्नीध्रचरित्रं स्त्रैणसम्मतम् ।
पत्न्यां हि पूर्वचित्यां यो नाभिमुख्यानजीजनत् ॥ ९ ॥
अस्मिन्वंशे प्रसिद्धोऽयमाग्नीध्रः स्त्रैणपुङ्गवः ।
विहसन्निव तस्येदं चरितं मुनिरब्रवीत् ॥ १० ॥

प्रियव्रतपुत्रस्य आग्नीध्रस्य चरित्रम् ॥ १ ॥ अनूढस्याप्यपत्यकामस्य आग्नीध्रस्य सकाशे ब्रह्मणा पूर्वचित्तिनामकाप्सरःप्रेषणम् ॥ २ ॥ मुग्धेनेव तेन तस्या वशीकरणार्थं चाटुवाक्यैरनुनयः ॥ ३ ॥ सुचिरं कालं तया सह रममाणस्याग्नीध्रस्य तस्यां नाभिकिंपुरुषादिनवपुत्रोत्पत्तिः ॥ ४ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

तृतीये चरितं नाभेः परं मङ्गलमीर्यते ।
यस्य यज्ञे प्रनीतः सन्पुत्रोऽभूदृषभो हरिः ॥ ११ ॥

आग्नीध्रपुत्रस्य नाभेश्चरित्रम् ॥ १ ॥ अनपत्येन तेनापत्यकामनया भगवन्तमुद्दिश्य यजनम् ॥ २ ॥ भगवतो नाभिभार्यायां मेरुदेव्यां ऋषभनाम्ना प्रादुर्भावः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थादित्रिभिः प्रोक्तमृषभस्येहितं महत् ।
लोकार्थं येन सत्कर्म नैष्कर्म्यं च निदर्शितम् ॥१२॥
चतुर्थे शतपुत्रस्य राज्यं तस्योपवर्ण्यते ।
यस्य राज्ये जनः सर्वः संतोषामृतनिर्वृतः ॥ १३ ॥

ऋषभचरित्रम् । तस्य जयन्तीनाम्न्यां भार्यायां भरतादिपुत्रशतोत्पत्तिः ॥ १ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे मोक्षधर्मोपदेशैः पुत्रानुशासनम् ।
उक्तं पारमहंस्यं च तस्य द्वन्द्वतितिक्षया ॥ १४ ॥

ऋषभेण ब्रह्मर्षिप्रवरसभायां स्वपुत्रेभ्यो मोक्षधर्मोपदेशः ॥ १ ॥ लोकशिक्षार्थं तेन संन्यासाश्रमं स्वीकृत्य देशाटनम् ॥ २ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठे लीनाभिमानस्य देहत्यागकमाभिधा ।
प्रदहन्तं दवाग्निं यः पश्यन्नपि न पश्यति ॥ १५ ॥

अवशिष्टऋषभचरित्रकथनम् ॥ १ ॥ तस्य जडवदवधूतवेषेण नानादेशेषु संचरणम् ॥ २ ॥ दवाग्निना तस्य देहत्यागः ॥ ३ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

अध्यायानां त्रयेणैवमृषभाख्यानमीरितम् ।
अष्टभिर्भरताख्यानमतः प्रस्तूयतेऽमृतम् ॥ १६ ॥
सप्तमे भरतो राज्ये चिरं यज्ञैर्हरिं यजन् ।
आरब्धकर्मनिर्वाणे हरिक्षेत्रेऽभजद्धरिम् ॥ १७ ॥

ऋषभपुत्रस्य भरतस्य चरित्रम् ॥ १ ॥ बहुभिः क्रतुभिर्यजनम् ॥ २ ॥ राज्यं पालयित्वा स्वतनयेषु राज्यं निक्षिप्य पुलहाश्रमं गत्वा बहूनि सहस्रवर्षाणि तस्य तपश्चरणम् ॥ ३ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमे भजतो विष्णुं तस्य कर्मान्तरायतः ।
एणरक्षाप्रसक्तस्य जातमेणत्वमीर्यते ॥ १८ ॥
कृपयाऽपि कृतः सङ्गः पतनायैव योगिनः ।
इति प्रदर्शयन्नाह भरतस्यैणपोषणम् ॥ १९ ॥

तपस्यतस्तस्य भरतस्य एणशिशुसङ्गेन जन्मान्तरे हरिणजन्मप्राप्तिः ॥ १ ॥

## नवमोऽध्यायः ॥ ९ ॥

नवमे जडविप्रत्वे तस्य रागाद्यभावतः ।
भद्रकालीपशुत्वेऽपि निर्विकारत्वमीर्यते ॥ २० ॥
पितुः प्राप्तात्मविज्ञानो भरतो मृगतां गतः ।
प्रारब्धकर्मवेगेन तदन्ते जडविप्रताम् ॥ २१ ॥

हरिणदेहत्यागानन्तरं द्विजवंश उत्पन्नस्य भरतस्य (जडभरतस्य) कथा ॥ १ ॥ आत्मानं जडवत्प्रदर्शयतः केदाररक्षणार्थं वीरासनेनोपविष्टस्य तस्य केनचिद्वृपलपतिना भद्रकाल्यै पुरुषपशुत्वेन नयनम् ॥ २ ॥ क्रुद्धया देव्या अकार्योद्यतानां वृषलानां शिरश्छेदः ॥ ३ ॥

## दशमोऽध्यायः ॥ १० ॥

दशमे क्षिपता राज्ञा शिबिकां स्वां वहन्मुनिः ।
स्वदुर्वादानुवादेन विज्ञायाशु प्रसादितः ॥ २२ ॥
एवंभूताविकारित्वमज्ञसर्वज्ञयोः समम् ।
इति सर्वज्ञतासिद्ध्यै रहूगणकथेरणम् ॥ २३ ॥

कस्यचिद्रहूगणनाम्नो राज्ञः शिबिकावहने नियुक्तेन जडभरतेन तस्मै ज्ञानोपदेशः ॥ १ ॥

## एकादशोऽध्यायः ॥ ११ ॥

एकादशे तु संपृष्टो रहूगणमहीभृता ।
उपादिशत्परं ज्ञानं स योगीति निगद्यते ॥ २४ ॥

पुना रहूगणप्रार्थितेन जडभरतेन तस्मै ज्ञानोपदेशः ॥ १ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

द्वादशे तु पुनः पृष्टः सन्देहेन महीभृता ।
स योगी सर्वसन्देहानपानुददितीर्यते ॥ २५ ॥

पुनस्तेन राज्ञा स्वसंशयान्पृष्टेन जडभरतेन राज्ञे ज्ञानोपदेशः ॥ १ ॥ तत्सन्देहापनुत्यर्थं स्वस्य पूर्वजन्मनि हरिणजन्मप्राप्तिकथनेन दुःसङ्गस्य त्याज्यत्वकथनम् ॥ २ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

त्रयोदशेऽविरक्ताय वृथा तत्वनिरूपणम् ।
इति वैराग्यदार्ढ्याय भवाटव्युपवर्ण्यते ॥ २६ ॥

जडभरतेन रहूगणं प्रति विरक्तेरावश्यकत्वकथनार्थं संसारस्य अटवीत्वेन वर्णनम् ॥ १ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

चतुर्दशे भवारण्यरूपकव्याकृतिः कृता ।
प्रस्तुते तस्य गोमायुमशकाद्यर्थकल्पना ॥ २७ ॥

पूर्वाध्यायोक्तप्रमेयस्य विवरणम् ॥ १ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

एवमष्टभिरध्यायैर्भरतस्योक्तमीहितम् ।
ततः पञ्चदशे तस्य कीर्त्यन्ते वंशजा नृपाः ॥२८॥

भरतवंशकथनम् ॥ १ ॥ विशेषतो गयचरित्रवर्णनम् ॥ २ ॥

## षोडशोऽध्यायः ॥ १६ ॥

पूर्वोक्तद्वीपसिन्ध्वादिमानचिह्नस्वरूपतः ।
स्पष्टं प्रवक्तुमारब्धा पञ्चाध्यायी ततः परम् ॥२९॥
षोडशेऽधस्तथा चोर्ध्वं परितः संनिवेशतः ।
मेरोः स्थितिर्मही कञ्जकर्णिका चोपवर्ण्यते ॥ ३० ॥
प्रियव्रतचरित्रोक्तावुक्ता द्वीपादिकल्पना ।
तद्विशेषविजिज्ञासुः कथान्ते परिपृच्छति ॥ ३१ ॥

प्रथमेऽध्याये प्रियव्रतचरित्रकथने तेन सप्तकृत्वो भूमण्डलप्रदक्षिणीकरणेन तद्रथनेमिभिः सप्त समुद्राः सप्त द्वीपाश्चोपकॢप्ता इति शुकाचार्योक्तं विस्तरतो ज्ञातुं परीक्षितः प्रश्नः ॥ १ ॥ शुकाचार्येण विस्तरतो भूगोलकथनारंभः ॥ २ ॥ तत्र जम्बूद्वीपस्य तन्मध्यप्रदेशस्थस्य मेरुपर्वतस्य तत्स्थनववर्षाणां तन्मर्यादागिरीणां च वर्णनम् ॥ ३ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

ततः सप्तदशे गङ्गागमनं तच्चतुर्दिशम् ।
इलावृते च रुद्रेण संकर्षणनिषेवणम् ॥ ३२ ॥

भगवतस्त्रिविक्रमस्य दक्षिणपादाङ्गुष्ठविनिर्भिन्नाद्ब्रह्माण्डोर्ध्वकटाहान्मेरोर्मूर्धनि चतुर्दिशं गलितस्य जलस्य गङ्गारूपेणागमनम् ॥ १ ॥ सीताऽलकनन्दादिगङ्गाशाखानां स्थानादिनिरूपणम् ॥ २ ॥ इलावृतखण्डवर्णनम् ॥ ३ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

अष्टादशे ततो मेरोः पूर्वादिक्रमतस्त्रिषु ।
त्रिषु चोत्तरवर्षेषु सेव्यसेवकवर्णनम् ॥ ३३ ॥

भद्राश्वादिवर्षषट्कवर्णनम् ॥ १ ॥ तत्र संनिहितस्य सेव्यस्य भगवद्रूपस्य तत्सेवकानां च वर्णनम् ॥ २ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

ऊनविंशे किंपुरुषे भारते चोपवर्ण्यते ।
सेव्यसेवकभावश्च भारतश्रैष्ठ्यमेव च ॥ ३४ ॥

किंपुरुषभारतवर्षवर्णनम् ॥ १ ॥ तत्रापि भारतवर्षस्य सर्ववर्षेभ्यः श्रैष्ठ्यं तस्यैव कर्मभूमित्वं च ॥ २ ॥

## विंशोऽध्यायः ॥ २० ॥

विंशे प्लक्षादिषड्द्वीपस्थितिमाह सहार्णवैः ।
लोकालोकस्थितिश्चान्तर्बहिर्भागादिमानतः ॥ ३५ ॥

प्लक्षादिद्वीपषट्कवर्णनम् ॥ १ ॥ तत्तदर्णवानां लोकालोकपर्वतस्य च वर्णनम् ॥ २ ॥

## एकविंशोऽध्यायः ॥ २१ ॥

एवमध्यायविंशत्या भूमर्यादा निरूपिता ।
अतः परं द्युमर्यादापालनं त्रिभिरुच्यते ॥ ३६ ॥
एकविंशे रवेः कालचक्रेण भ्रमतोऽन्वहम् ।
स्वगत्या राशिसंचारैर्लोकयात्रा निरूप्यते ॥ ३७ ॥

ज्योतिश्चक्रवर्णनम् ॥ १ ॥ सूर्यरथवर्णनम् ॥ २ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

द्वाविंशे सोमशुक्रादेः स्थानमाहोत्तरोत्तरम् ।
तत्तद्गत्यनुसारेण इष्टानिष्टे तथा नृणाम् ॥ ३८ ॥

चन्द्रादिग्रहाणां स्थानकथनम् ॥ १ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

त्रयोविंशे ध्रुवस्थानं ज्योतिश्चक्राश्रयं ततः ।
शिशुमारस्वरूपेण हरेश्च स्थितिरुच्यते ॥ ३९ ॥

ध्रुवमण्डलस्य शिशुमाररूपिणो हरेश्च स्थानकथनम् ॥ १ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

एवं त्रिभिर्भूमर्यादापालनं वर्णितं तथा ।
अधोभुवनमर्यादापालनं त्रिभिरुच्यते ॥ ४० ॥
चतुर्विंशे रवेरर्वाक् स्वर्भान्वादिस्थितिः क्रमात् ।
अतलादिबिलस्वर्गमर्यादाः सप्त वर्णिताः ॥ ४१ ॥

राह्वादिस्थितिः अतलादिबिलस्वर्गस्थितिकथनं च ॥ १ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

पञ्चविंशे ततोऽधस्तादाह शेषस्य संस्थितिम् ।
संजिहीर्षोरिदं काले यत्र रुद्रसमुद्भवः ॥ ४२ ॥

पाताललोके निवसतः सहस्रफणामण्डलमण्डितस्य भूमण्डलं शिरसि धृतवत आदिशेषस्य स्थितिकथनम् ॥ १ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

षड्विंशे तु ततोऽधस्तान्नरकस्थितिरुच्यते ।
पापिनो यत्र दह्यन्ते यमदूतैर्यथायथम् ॥ ४३ ॥

पापिनां यातनास्थानस्य नरकस्य स्थितिकथनम् ॥ १ ॥

इति पञ्चमः स्कन्धः ॥ ५ ॥

श्रीगोपालकृष्णाय नमः ।

# षष्ठः स्कन्धः ॥ ६ ॥

विसर्गसंभवाञ्जीवान्स्वमर्यादासु संस्थितान् । विष्णुः पात्यखिलैः रूपैरित्येव पञ्चमे स्थितम् ॥ १ ॥
अध्यायैकोनविंशत्या षष्ठे पोषणमुच्यते । अतिलङ्घितमर्यादभक्तरक्षणलक्षणम् ॥ २ ॥
अजामिलो मनुष्येषु महापापी यथाऽवितः । विश्वरूपादिघाती च यथा देवेषु वासवः ॥ ३ ॥
अजामिलस्य भक्तत्वं विष्णुदूतैर्निरूपितम् । सङ्केतभगवन्नामपुत्रस्नेहानुषङ्गजम् ॥ ४ ॥
इन्द्रोऽपि भगवद्भक्तः सख्येनोपेन्द्रसेवकः । तदधीनसुरैश्वर्यशत्रुनिर्जयजीवितः ॥ ५ ॥
तत्रादौ त्रिभिरध्यायैरजामिलकथोच्यते । विश्वरूपकथा षड्भिरिन्द्रदोषोक्तये ततः ॥ ६ ॥
इन्द्रस्यैव तु दोषोक्त्यै वृत्राख्यानं ततोऽष्टभिः । द्वाभ्यां च मरुदाख्यानमेवं प्रकरणक्रमः ॥ ७ ॥

## प्रथमोऽध्यायः ॥ १ ॥

तत्रादौ प्रथमे विष्णोर्दूतैः पातकिमोचने ।
तत्पापस्यापनायोक्तं याम्यैर्धर्मादिलक्षणम् ॥ ८ ॥

पापपरिहारकं प्रायश्चित्तं कीदृशमिति परीक्षिता पृष्टेन शुकाचार्येण पश्चात्तापसंयुक्तं भगवन्नामस्मरणादिकमेव प्रायश्चित्तमिति वक्तुं अजामिलोपाख्यानारंभः ॥ १ ॥ भ्रष्टसदाचरेण दासीपतिना अजामिलनाम्ना विप्रेण मरणकाले नारायण ३ इति दूरस्थस्वपुत्राह्वानम् ॥ २ ॥ तत्काल एवागतैर्विष्णुदूतैर्यमदूतान्निवार्य अजामिलस्य यमपाशान्मोचनम् ॥ ३ ॥ यमदूतविष्णुदूतयोर्विवादः ॥ ४ ॥ यम दूतैः अजामिलकृतपापानुवादपूर्वकं तस्य दण्डयत्वकथनम् ॥ ५ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वितीये वैष्णवैर्याम्यान्नाममाहात्म्यमद्भुतम् ।
श्रावयित्वा द्विजो विष्णोर्लोकं नीत इतीर्यते ॥ ९ ॥

विष्णुदूतैर्यमदूतान्प्रति अजामिलेन मरणकाले नारायणनाम्नो यदृच्छयोच्चरितत्वेऽपि तस्य सकलदुरितनिर्मुक्तत्वकथनपूर्वकं तस्य याम्यपाशान्निर्मोचनम् ॥ १ ॥ ततो जातानुतापेनाजामिलेन गङ्गाद्वारे तपस्तप्त्वा योगेन तनुत्यागः ॥ २ ॥ पुनर्विष्णुदूतैर्विमानमारोप्य तस्य विष्णुलोकप्रापणम् ॥ ३ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

तृतीये तु यमेनापि वैष्णवोत्कर्षवर्णनैः ।
सान्त्वयित्वा स्वदूतास्ते वैष्णवे किङ्करीकृताः ॥१०॥

विष्णुदूतकृतं स्वावज्ञानं स्वदूतमुखतो ज्ञातवता यमेनापि स्वदूतेभ्यः विष्णोरेव सर्वोत्तमत्वकथनम् ॥ १ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थादित्रिभिर्विश्वरूपजन्मविवक्षया ।
प्रचेतःसुतदक्षस्य वंशस्तावत्प्रतन्यते ॥ ११ ॥

चतुर्थे तु प्रजासृष्ट्यै दक्षेणाराधनं हरेः ।
तपसा हंसगुह्याख्यस्तोत्रेण च निरूप्यते ॥ १२ ॥

प्रसक्तानुप्रसक्तेन स्वायंभुवसुतान्वये ।
नामप्रभावमाकर्ण्य वंशव्यासं बुभुत्सते ॥ १३ ॥

दशानां प्रचेतसां मारिषानाम्न्या कन्यया विवाहः ॥ १ ॥ तेषां तस्यां दक्षनामकपुत्रोत्पत्तिः ॥ २ ॥ दक्षकृतहंसगुह्याख्यस्तुत्या तुष्टस्य भगवतो नारायणस्याज्ञया दक्षस्य पञ्चजनप्रजापतिपुत्र्या असिक्न्या विवाहः ॥ ३ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे नारदेनाथ वाचःकूटैस्तु नाशितान् ।
सुतानाकर्ण्य दक्षोऽमुं शशापेति निरूप्यते ॥ १४ ॥

अयुतसङ्ख्याकानां हर्यश्वनाम्नां प्रजासर्गे उद्युक्तानां दक्षपुत्राणां नारदेन वाचःकूटैः वैराग्योत्पादनम् ॥ १ ॥ पुनः शबलाश्वनाम्नां दक्षपुत्राणामपि नारदेन वैराग्योत्पादनम् ॥ २ ॥ रुष्टेन दक्षप्रजापतिना नारदाय शापदानम् ॥ ३ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठे दक्षेण सृष्टायां कन्यापङ्क्त्यां प्रकीर्तिताः ।
पृथग्वंशा यतो जातो विश्वरूपोऽदितेः सुतात् ॥१५॥

दक्षकन्यावंशकथनम् ॥ १ ॥ त्वष्टृनामकादादित्यात् विश्वरूपाचार्योत्पत्तिः ॥ २ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

सप्तमे विश्वरूपोऽसौ पौरोहित्ये वृतः सुरैः ।
गुरुणा संपरित्यक्तैः पौरोहित्यमथाऽकरोत् ॥ १६ ॥

बृहस्पत्याचार्येण परित्यक्तैः सुरैः विश्वरूपाचार्यस्य पौरोहित्ये वरणम् ॥ १ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमे विश्वरूपस्तु वर्म नारायणात्मकम् ।
इन्द्राय प्राह येनेन्द्रो गुप्तो दैत्यानथाजयत् ॥ १७ ॥

विश्वरूपाचार्येण इन्द्राय नारायणवर्मोपदेशः ॥१॥

## नवमोऽध्यायः ॥ ९ ॥

नवमे विश्वरूपे तु हते शक्रेण कोपतः ।
त्वष्ट्रा चोत्पादिते वृत्रे भीतैर्देवैः हरेः स्तुतिः ॥ १८ ॥

इन्द्रेण विश्वरूपाचार्यहननम् ॥ १ ॥ स्वपुत्रवधरुष्टेन त्वष्ट्रा इन्द्रहननाय वृत्रोत्पादनम् ॥ २ ॥

वृत्रत्रस्तैर्देवैर्भगवत्स्तुतिः ॥ ३ ॥ भगवता देवान्प्रति दधीचेरस्थीनि संगृह्य वज्रायुधनिर्माणे आज्ञापनम् ॥ ४ ॥

## दशमोऽध्यायः ॥ १० ॥

दशमे केशवादिष्टदध्यङ्ङस्थिजवज्रधृत्।
इन्द्रोऽयुध्यत वृत्रेण सासुरेण स निर्जितः ॥ १९ ॥

देवैः स्वार्थानि याचितेन दधीचा योगेन स्वदेहत्यागः ॥ १ ॥ तदस्थिनिर्मितं वज्रायुधधारायेन्द्रस्य अनेकैरसुरैः सहितेन वृत्रासुरेण सह युद्धम् ॥ २ ॥ युद्धे असुराणां पराजयः ॥ ३ ॥

## एकादशोऽध्यायः ॥ ११ ॥

एकादशे तु वृत्रस्य युद्ध्यमानस्य वज्रिणा।
भक्तिज्ञानवलोदर्काश्चित्रा वाचोऽनुवर्णिताः ॥ २० ॥

इन्द्रेण सह युद्ध्यमानस्य वृत्रस्य इन्द्रं बहु विनिन्द्य भगवद्भक्तियुक्ता वाचः ॥ १ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

द्वादशेऽतिविषण्णेन स्वयमुत्साहितेन तु।
महेन्द्रेण महायुद्धे वृत्रस्य वध ईर्यते ॥ २१ ॥

इन्द्रेण छिन्नैकबाहुना वृत्रेण सह युद्ध्यमानस्य इन्द्रस्य हस्तात् वज्रायुधभ्रंशः ॥ १ ॥ लज्जया पुनर्वज्रायुधमगृहीतवन्तं इन्द्रं प्रति वृत्रासुरेण ज्ञानोपदेशः ॥ २ ॥ वृत्रं स्तुत्वा पुनर्युद्ध्वा वज्रायुधेन वृत्रवधः ॥ ३ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

त्रयोदशे तु वृत्रस्य ब्रह्महत्यामहाभयात्।
चिरं नष्टोऽवितः शक्रो विष्णुनेति निगद्यते ॥ २२ ॥

इन्द्रेण वृत्रे हते सर्वलोकानां सुखप्राप्तिः ॥ १ ॥ इन्द्रस्य तु वृत्रहत्यानिमित्तकब्रह्महत्याप्राप्तिः ॥ २ ॥ ब्रह्महत्याया भीत्वा इन्द्रेण इतरालक्षितस्थले गूढं निवासः ॥ ३ ॥ ब्रह्मर्षिभिर्विष्णरेनाश्वमेधेन याजितस्येन्द्रस्य ब्रह्महत्याया विमोकः ॥ ४ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

वृत्रस्य ज्ञानभक्त्यादि श्रुत्वा पृष्टः परीक्षिता।
हेतुमाह चतुर्भिस्तत्प्राग्जन्मचरितोक्तिभिः ॥ २३ ॥

आसुरजातेरपि वृत्रस्य तादृशभगवज्ज्ञानप्राप्तिकारणं किमिति परीक्षिता पृष्टेन शुकेन तत्कथनार्थं तस्य प्राग्जन्मनि चित्रकेतुत्वात्तच्चरित्रकथनम् ॥ १ ॥ पुत्राभावेन दूयमानस्य चित्रकेतोः अङ्गिरोनामकऋषिणा त्वाष्ट्रिष्टिकरणेन पुत्रप्राप्तिः ॥ २ ॥ सापत्नमातृदत्तविषभक्षणेन तस्य शिशोर्मरणम् ॥ ३ ॥ तेन चित्रकेतोः शोकाधिगमः ॥ ४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

ततःपञ्चदशे चित्रकेतोः शोकापनोदनम्।
कृतं तत्त्वोपदेशेन नारदेनाङ्गिरोयुजा ॥ २४ ॥

नारदाङ्गिरोभ्यां चित्रकेतोः सकाशमेत्य तत्त्वोपदेशेन तस्य पुत्रशोकापनोदनम् ॥ १ ॥

## षोडशोऽध्यायः ॥ १६ ॥

षोडशे तत्सुतास्यैव विशोकीकृत्य तं नृपम्।
आदिदेश महाविद्यां नारदः शेषतोषिणीम् ॥ २५ ॥

नारदाङ्गिरोभ्यां मृतपुत्रजीवमाहूय तन्मुखेन राज्ञो ज्ञानोत्पादनं शेषदेवतोपकरविद्योपदेशश्च ॥ १ ॥ सप्तरात्रं तस्या विद्याया जपात् शेषदेवस्य दर्शनम् विद्याधरपदप्राप्तिश्च ॥ २ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

ततः सप्तदशेऽमोघमहर्धिं प्राप्य खेचरन्।
विहस्य गिरिशं शापादुमाया वृत्रतां गतः ॥ २६

महर्षिं प्राप्तेन चित्रकेतुना महादेवस्य निन्दनम् । तेन क्रुद्धाया उमायाः शापाद्वृत्रासुरजन्मप्राप्तिः ॥ १ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

आदित्यानां चतुर्थस्य त्वष्टुर्वंशप्रसङ्गतः
प्रोक्तमिन्द्रकृतं विश्वरूपवृत्रवधादिकम् ॥ २७ ॥
अदितेः पञ्चमादीनां पुत्राणामन्वयोक्तिभिः ।
अष्टादशे दितेर्गर्भे शक्रेण मरुतां भिदा ॥ २८ ॥
त्वष्टुर्वंशमनुक्रम्य सप्रसङ्गं यथाक्रमम् ।
आदित्यानामथान्येषां वंशानाह महामुनिः ॥ २९ ॥

पूर्वं अदितिपुत्राणां विवस्वदादीनां त्वष्ट्रन्तानां चतुर्णां वंशो निरूपितः ॥ १ ॥ तत्प्रसक्त्या विश्वरूपवृत्रासुरकथाश्चोक्ताः ॥ २ ॥ अत्र अन्येषाम् आदित्यानां वंशकथनम् ॥ ३ ॥ कश्यपपत्नीषु दितिवंशमनुक्रम्य एकोनपञ्चाशन्मरुदुत्पत्तिकथनम् ४ ॥

## एकोनविंशोऽध्यायः ॥ १९

ऊनविंशे तु यत्प्रोक्तं कश्यपेन दितेर्व्रतम् ।
तदेव विवृतं लोकहिताय हरितोषणम् ॥ ३० ॥

पूर्वाध्याये कश्यपेन दित्यै विहितं पुमपत्योत्पादकं वैष्णवव्रतं विस्तरतो ज्ञातुमिच्छुना परीक्षिता पृष्टेन शुकाचार्येण सप्रकारं तत्कथनम् ॥ १ ॥

इति षष्ठः स्कन्धः ॥ ६ ॥

श्रीगोपालकृष्णाय नमः ।

# सप्तमः स्कन्धः ॥ ७ ॥

ऊतिः पञ्चदशाध्यायैः सप्तमे वर्ण्यतेऽधुना । ऊतिश्च वासना प्रोक्ता तत्तत्कर्मानुसारिणी ॥ १ ॥
अशुभा च शुभा चेति द्विधा सा हेतुभेदतः । अशुभा महतां कोपाच्छुभा महदनुग्रहात् ॥ २ ॥
हरेर्द्वारपयोर्यद्वद्वैकुण्ठे वसतोरपि । चतुःसनरुषा विष्णुद्वेषाद्यशुभवासना ॥ ३ ॥
यथा च दैत्यगर्भेऽपि प्रह्लादस्य सतः स्थिरा । नारदानुग्रहादास विष्णौ सद्भक्तिवासना ॥ ४ ॥
स्वभक्तं च सदा विष्णुर्द्विषं तमपि रक्षति । तृतीयेऽथ भवे द्वाःस्थावकरोदात्मसात्पुनः ॥ ५ ॥
अतो मनीषिणा यत्नः कार्यो महदनुग्रहे । इत्येतदर्थमूतीनामत्र लक्षणमुच्यते ॥ ६ ॥
तत्रादौ दशभिर्दैत्यतत्पुत्रमतिभेदतः । महत्कोपानुकंपोत्थवासनाभेद उच्यते ॥ ७ ॥
सद्वासना च युज्येत कर्मभिः शुद्धचेतसः । परैस्तु पञ्चभिस्तस्मात्क्रियते धर्मनिर्णयः ॥ ८ ॥

## प्रथमोऽध्यायः ॥ १ ॥

तत्र तु प्रथमेऽध्याये हिरण्यकशिपोः सुते ।
विष्णुभक्ते विरोधस्तु विप्रशापात्त ईर्यते ॥ ९ ॥

सर्वसमस्य भगवतो वैषम्यं कथमिति परीक्षिता पृष्टेन शुकाचार्येण तदुत्तरदानार्थं युधिष्ठिरनारदसंवादकथनम् ॥ १ ॥ कलभाषणमारभ्य श्रीकृष्णं द्विषतः शिशुपालस्य कथं सायुज्यप्राप्तिरिति युधिष्ठिरपृष्टेन नारदेन भगवत्पार्षदयोर्जयविजययोः

सनकादिशापेनामुष्योर्नौ हिरण्यकशिपुहिरण्याक्षनाम्ना जननकथाकथनम् ॥ २ ॥ तयोः स्वपुत्रं द्विषन हिरण्यकशिपुर्नृसिंहरूपिणा हरिणा हतः। हिरण्याक्षो वराहरूपिणा हरिणा हत इति च कथनम् ॥ ३ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वितीये विष्णुरोषेण लोकं विद्राव्य दानवैः ।
तद्धतभ्रातृपुत्रादीनितिहासैरसान्त्वयत् ॥ १० ॥

स्वपुत्रे प्रह्लादे हिरण्यकशिपोर्द्वेषः कथं संजात इति युधिष्ठिरपृष्टेन नारदेन तत्कथनारंभः ॥ १ ॥ श्रीवराहकृतहिरण्याक्षवधनन्तरं हिरण्यकशिपुना स्वभ्रातृभार्यायाः स्वमातुर्दितेश्च उशीनरेश्वरदृष्टान्तकथनेन परिसान्त्वनम् ॥ २ ॥ मृतम् उशीनरराजं सुयज्ञमुद्दिश्य विषीदतां प्रेतबन्धूनां यमस्य च संवादः ॥ ३ ॥ यमेन तान्प्रति लुब्धककुलिङ्गमिथुनकथाकथनम् ॥ ४ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

तृतीये तस्य तपसा तप्तं वीक्ष्य जगद्विधिः ।
आगत्य विस्मितस्तेन संस्तुतश्च वरानदात् ॥ ११ ॥

हिरण्यकशिपुना ब्रह्माणमुद्दिश्य तपश्चरणम् ॥ १ ॥ वरं दातुमागतं ब्रह्माणं प्रति हिरण्यकशिपुना वरयाचनं ब्रह्मणा वरदानं च ॥ २ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थे तु वरांल्लब्ध्वा विजित्याखिललोकपान् ।
विष्णुद्वेषेण तान्सर्वान्दैत्येन्द्रः समपीडयत् ॥ १२ ॥

ब्रह्मणः सकाशात्प्राप्तवरेण हिरण्यकशिपुना इन्द्रस्य त्रिविष्टपहरणम् ॥ १ ॥ तदुपद्रवसंविग्नैर्देवैः भगवन्तं प्रति शरणगमनम् ॥ २ ॥ श्रीमता नारायणेन तेषामभयदानपूर्वकं 'यदाऽयमसुरः परमभागवताय स्वपुत्राय प्रह्लादाय द्रुह्यति तदा तं हनिष्यामि' इत्युक्त्वा प्रेषणम् ॥ ३ ॥ नारदेन युधिष्ठिरं प्रति प्रह्लादकथाकथनम् ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे गुरुतोऽधीतं त्यक्त्वा विष्णुस्तुतौ रतम् ।
घातयन्द्विपसर्पाद्यैः सुतं दैत्यो न चाशकत् ॥ १३ ॥

हिरण्यकशिपुना "गुरोः सकाशाद्यदधीतं तत्कथय" इत्युक्तेन प्रह्लादेन विष्णौ भक्तिरवश्यं कर्तव्येति कथनम् ॥ १ ॥ प्रह्लादस्य विष्णुभक्तत्वं ज्ञात्वा क्रुद्धेन हिरण्यकशिपुना नानाप्रकारैः तद्धननप्रयत्नः ॥ २ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान् ।
अनुकम्प्य परं तत्त्वं नारदोक्तमुपादिशत् ॥ १४ ॥
निरर्थकक्रियालापैरायुर्व्ययमजानताम् ।
प्रह्लादः सदयं प्राह धर्मं भागवतं कृती ॥ १५ ॥

प्रह्लादेनासुरबालकेभ्यः परतत्त्वोपदेशः ॥ १ ॥ "अन्तःपुरस्थस्य तव ज्ञानप्राप्तिः कथम्" इति असुरबालकैः प्रह्लादं प्रति प्रश्नः ॥ २ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

सप्तमे मातृगर्भस्थे स्वस्मिन्नारदभाषितम् ।
प्रह्लादो वर्णयामास शिष्यप्रत्ययसिद्धये ॥ १६ ॥
अथापि नारदादेतन्मया गर्भे इतीरितुम् ।
तत्प्रस्तावकथामाह पद्यैः षोडशभिः सुधीः ॥ १७

प्रह्लादेन मातृगर्भस्थस्यैव स्वस्य ज्ञानप्राप्ति नारदानुग्रहेणेति कथनम् ॥ १ ॥ गर्भस्थस्य तस

नारदेनोपदेशं घटयितुं गर्भिण्या स्वमातुरिन्द्रेणापहरणादिकथाकथनम् ॥ २ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमेऽनिरुषा सूनुं निघ्नन्दैत्यो हतः स्वयम् ।
आविर्भूय नृसिंहेन स च ब्रह्मादिभिः स्तुतः ॥ १८॥
अन्तःकृपासुधापूर्णो बहिःक्रोधो नृकेसरी ।
दैत्येन्द्रमरिभावेन भजन्तं समभावयत् ॥ १९ ॥

पुनः स्वपुत्रं प्रह्लादं हन्तुमुद्युक्तस्य हिरण्यकशिपोः तत्क्षणे स्तंभादाविर्भूतेन नृसिंहरूपिणा हननम् ॥ १ ॥ ब्रह्मरुद्रादि देवैर्नृसिंहस्तवनम् ॥ २ ॥

## नवमोऽध्यायः ॥ ९ ॥

नवमे ब्रह्मणा भीत्या चोदितोऽसुरबालकः ।
कोपं प्रशमयन्नस्तौन्नृसिंहमतिभीषणम् ॥ २० ॥

कुपितं नृसिंहं शमयितुं ब्रह्मणा प्रेषितेन प्रह्लादेन श्रीनृसिंहस्तुतिः ॥ १ ॥

## दशमोऽध्यायः ॥ १० ॥

दशमे त्वनुगृह्यामुं भक्तमन्तर्हिते हरौ ।
प्रसङ्गाद्धरिणा रुद्रे कृतोऽनुग्रह ईर्यते ॥ २१ ॥

श्रीनृसिंहेन प्रह्लादाय वरदानम् ॥ १ ॥ तस्मात्प्रदेशाद्भगवतोऽन्तर्धानम् ॥ २ ॥ न केवलं प्रह्लादमेवानुजग्राह विष्णुरपितु श्रीरुद्रमपीति कथयितुं त्रिपुरासुरवधकथा ॥ ३ ॥

## एकादशोऽध्यायः ॥ ११ ॥

एकादशे नृणां धर्माः साधारण्येन वर्णिताः ।
विशेषेण च वर्णानां मुख्यामुख्याश्च योषिताम् ॥२२॥
तदेवं दशभिर्ज्ञानभक्तियोगावुदीरितौ ।
अथ पञ्चभिरध्यायैः कर्मयोगोऽनुवर्ण्यते ॥ २३ ॥

नारदोक्तं प्रह्लादचरित्रं श्रुतवता युधिष्ठिरेण तं प्रति वर्णाश्रमाचारकथनप्रार्थना ॥१॥ नारदेन नृणां साधारणधर्मस्य, वर्णधर्माणां स्त्रीधर्माणां च कथनम् ॥ २ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

द्वादशे वर्ण्यते धर्मो ब्रह्मचारिवनस्थयोः ।
चतुर्णामाश्रमाणां च साधारण्येन कश्चन ॥ २४ ॥

ब्रह्मचारिवानप्रस्थधर्मकथनम् ॥ १ ॥ साधारण्येन चातुराश्रम्यधर्मकथनम् ॥ २ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

त्रयोदशे यतेर्धर्मः साधकस्योच्यते महान् ।
अवधूतेतिहासेन सिद्धावस्था च वर्ण्यते ॥ २५ ॥

यतिधर्मकथनम् ॥ १ ॥ आजगरमुनिचरित्रम् ॥ २ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

चतुर्दशे गृहस्थस्य परमो धर्म ईर्यते ।
देशकालादिभेदेन पुनः श्रेयोविशेषकृत् ॥ २६ ॥

गृहस्थाश्रमधर्मकथनम् ॥ १ ॥ महत्सेवाया अवश्यकर्तव्यत्वे प्रथमम् उपबर्हणनामकगन्धर्वस्य स्वस्य महदवज्ञानेन शूद्रजन्मप्राप्तेः, तस्मिञ्जन्मनि महत्सेवया ब्रह्मपुत्रत्वप्राप्तेश्च कथनम् ॥ २ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

ततः पञ्चदशे वर्णाश्रमनिबन्धनम् ।
सारतः संग्रहेणाथ वर्ण्यते मोक्षलक्षणम् ॥ २७ ॥

सर्ववर्णाश्रमसाधारणधर्मकथनम् ॥ १ ॥

इति सप्तमः स्कन्धः ॥ ७ ॥

श्रीवेदव्यासाय नमः।
श्रीगोपालकृष्णाय नमः।

# अष्टमः स्कन्धः ॥ ८ ॥

अथाष्टमे चतुर्विंशत्यध्यायैर्मनुवर्णनम्। तत्सुतैर्ऋषिदेवेन्द्रैर्मूर्तिभिश्च हरेः सह ॥ १ ॥
प्रतिमन्वन्तरं चैव मन्वाद्याः षट् पृथक्पृथक्। प्रवर्तयन्ति सद्धर्मान्पालयन्त्याचरन्ति च ॥ २
अतो मन्वन्तरस्योक्तं सद्धर्म इति लक्षणम्। येन वै क्रियमाणेन नरो न निरयं व्रजेत् ॥ ३ ॥

## प्रथमोऽध्यायः ॥ १ ॥

तत्र तु प्रथमे स्वायंभुवः स्वारोचिषस्तथा।
उत्तमस्तामसश्चेति चतुर्मनुनिरूपणम् ॥ ४ ॥
स्वायंभुवेऽन्तरेऽनन्तदुरन्तगुणवर्णनात्।
मुदितः परिपप्रच्छ सर्वमन्वन्तरस्थितिम् ॥ ५ ॥

स्वायंभुवादिमन्वन्तरचतुष्टयनिरूपणम् ॥ १ ॥ चतुर्थमन्वन्तरीयभगवदवतारभूतस्य हरेर्गजेन्द्रमोक्षण-कथोपक्षेपः ॥ २ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

तुर्ये मन्वन्तरे प्रोक्तं गजेन्द्रस्य विमोक्षणम्।
द्वितीयादित्रिभिस्तत्तु विस्तरेणोपवर्ण्यते ॥ ६ ॥
द्वितीये तु गजेन्द्रस्य गजीभिः क्रीडतो जले।
दैवाद्ग्राहगृहीतस्य हरिस्मृतिरुदीर्यते ॥ ७

गजेन्द्रमोक्षकथारंभः ॥ १ ॥ त्रिकूटपर्वते स्वैरं गजीभिः सह विक्रीडतो मदान्धस्य गजेन्द्रस्य जलं पातुं सरोऽवतीर्य लोडयतो ग्राहेण चरणे गृहीतस्य तस्य दुःखकाले हरिस्मरणप्राप्तिः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

तृतीये तु गजेन्द्रेण स्तुतो हरिरुपेत्य तम्।
समुद्दधार तं ग्राहाद्ग्राहं देवलशापतः ॥ ८ ॥

ग्राहगृहीतेन गजेन्द्रेण भगवत्स्तुतिः ॥ १ ॥ तत्क्षणागतेन हरिणा ग्राहाद्गजेन्द्रमोचनम् ॥ २ ॥ ग्राहस्य च देवलशापतो मोचनम् ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थे तु तयोर्ग्राहः प्राप गन्धर्वतां पुनः।
गजं स्वपार्षदं कृत्वा हरिर्निन्ये निजं पदम् ॥ ९ ॥

देवलशापेन ग्राहतां प्राप्तस्य हूहूनामकगन्धर्वस्य स्वस्वरूपप्रापणम् ॥ १ ॥ पूर्वमिन्द्रद्युम्ननाम्नो राज्ञ अगस्त्यशापाद्गजेन्द्रत्वं प्राप्तस्य भगवता तज्जन्म परिहारपूर्वकं स्वपार्षदीकरणम् ॥ २ ॥ हरिण गजेन्द्रमोक्षपारायणस्य फलकथनम् ॥ ३ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

अमृताख्यानमष्टाभिरध्यायैरनुवर्ण्यते।
स्वभक्तपक्षपातेन यत्र योषायितं प्रभोः ॥ १० ॥

पञ्चमे पञ्चमं चाथ षष्ठं चाकथयन्मनुम्।
विप्रशापाच्च निःश्रीकैः कृतां देवैर्हरेः स्तुतिम् ॥११

पञ्चमषष्ठमन्वन्तरनिरूपणम् ॥ १ ॥ अमृत मथनकथारंभः ॥ २ ॥ दुर्वाससः शापादितिजा राजितैर्देवैः स्वपराजयं विरिञ्चये विज्ञाप्य तेन स क्षीराब्धिगमनम् ॥ ३ ॥ ब्रह्मणा भगवद्दर्शन तत्स्तुतिः ॥ ४ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठे पुनः स्तुतिर्विष्णावाविर्भूते सुरैः कृता ।
तन्मन्त्रेणासुरैः साकममृतार्थे महोद्यमः ॥ १२ ॥

स्तुतिप्रसन्नेन भगवता देवेभ्यः प्रत्यक्षीभवनम् ॥ १ ॥ पुनरपरोक्षतो ब्रह्मणा भगवत्स्तुतिः ॥ २ ॥ भगवता श्रीनारायणेन देवान्प्रति असुरैः सह सन्धिं कृत्वा तत्साहाय्येन क्षीरोदधौ अमृतमथनार्थमाज्ञादानम् ॥ ३ ॥ तदर्थं मन्दरपर्वतानयनम् ॥ ४ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

सप्तमे मथनोद्भूतविषभीत्याऽखिलैर्जनैः ।
स्तुतः सत्कृपया रुद्रः पपौ विषमितीर्यते ॥ १३ ॥

अमृतमथनारंभः ॥ १ ॥ रुद्रेण विषपानम् ॥ २ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विष्णौ वृतेऽसुरैः ।
धन्वन्तरेर्हृते सोमे मोहिन्युद्भव ईर्यते ॥ १४ ॥

कामधेन्वाद्युत्पत्तिः ॥ १ ॥ महालक्ष्म्युत्पत्तिः तया इतरान्सर्वान्देवान् दोषिणो विज्ञाय निर्दोषस्य भगवतो वरणं च ॥ २ ॥ अमृतकलशहस्तस्य धन्वन्तरेरुत्पत्तिः ॥ ३ ॥ असुरैरमृते हृते तद्वञ्चनार्थं भगवता मोहिनीरूपस्वीकारः ॥ ४ ॥

## नवमोऽध्यायः ॥ ९ ॥

नवमे मोहितैर्दैत्यैरर्पितेऽमृतभाजने ।
तद्वञ्चनेन देवेभ्योऽमृतं दत्तमितीर्यते ॥ १५ ॥

मोहिन्या रूपं दृष्ट्वा मोहितैर्दैत्यैर्मोहिनीहस्ते अमृतपात्रसमर्पणम् ॥ १ ॥ मोहिन्या दैत्यान्वञ्चयित्वा देवेभ्योऽमृतपरिवेषणम् ॥ २ ॥

## दशमोऽध्यायः ॥ १० ॥

दशमे मत्सराद्दैत्यैरारब्धे तु मृधे सुरैः ।
दैत्यमायाविपण्णेषु देवेष्वाविर्बभौ हरिः ॥ १६ ॥
तदेव ममतावासिर्नाभक्तानामितीरितम् ।
भक्तमत्सरतः प्राणहानिः पुनरुदीर्यते ॥ १७ ॥

दैत्यैर्मत्सराद्देवैस्सह युद्धारंभः ॥ १ ॥ पराजयत्सु देवेषु तद्रक्षणार्थं भगवत आविर्भावः ॥ २ ॥

## एकादशोऽध्यायः ॥ ११ ॥

एकादशे तु देवेषु दैत्यघातिषु नारदः ।
देवानवारयच्छुक्रो मृतान्दैत्यानजीवयत् ॥ १८ ॥

इन्द्रेण जंभबलपाकनमुचिप्रभृतीनां वधः ॥ १ ॥ नारदेन युद्धनिवारणम् ॥ २ ॥ शुक्राचार्येण मृतानां अविनष्टावयवानां दैत्यानामुज्जीवनम् ॥ ३ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

द्वादशे मोहिनीरूपविभ्रमालोकनोत्सुकम् ।
भवं स मोहयामास हरिः पुनरसान्त्वयत् ॥ १९ ॥
अमुह्यन्नसुरा विष्णुमायया न तदद्भुतम् ।
इति वक्तुं महादेवमोहोऽप्युपवर्ण्यते ॥ २० ॥

मोहिनीरूपं पुनः स्वस्मै दर्शयितुं रुद्रयाचितेन भगवता तत्प्रदर्शने सति तत्सौन्दर्यदर्शनक्षुभितमनसो हरस्य मोहाधिगमः ॥ १ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

त्रयोदशे तु वर्ण्यन्ते सप्तमादीन्यनुक्रमात् ।
मन्वन्तराणि सर्वाणि षड्विधानि पृथक्पृथक् ॥ २१ ॥

सप्तमादिचतुर्दशमन्वन्तरवर्णनम् ॥ १ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

चतुर्दशे तु सर्वेषां मन्वादीनां यथायथम् ।
पृथक्कर्माणि वर्ण्यन्ते भगवद्वशवर्तिनाम् ॥ २२ ॥

सर्वमन्वन्तरेष्वपि मन्वादीनां साधारणकर्मकथनम् ॥ १ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

बलिं पञ्चदशे विश्वजिता ऽऽचार्या अयाजयन्।
ततोऽसौ स्वर्गमजयद्भयाद्देवा निलिल्यिरे ॥ २३ ॥
अत्रेर्यते नवाध्याय्या वामं वामनचेष्टितम्।
निग्रहच्छलतो यत्र बलेर्भूयाननुग्रहः ॥ २४ ॥

पूर्वमिन्द्रपराजितस्य बलेः पुरोहितेन शुक्राचार्येण सर्वलोकजयाय विश्वजिता याजनम् ॥ १ ॥ गुरुप्रसादसमुन्नद्धबलस्य बलेर्भयात् देवगणसहितस्येन्द्रस्य त्रिविष्टपात्पलायनम् ॥ २ ॥

## षोडशोऽध्यायः ॥ १६ ॥

षोडशे पुत्रनाशेन शोचन्त्या अदितेः पतिः।
प्रार्थितः कश्यपः प्राह पयोव्रतमितीर्यते ॥ २५ ॥

पुत्राणां त्रिविष्टपनाशेन शोचन्त्या अदित्या प्रार्थितेन कश्यपेन हरितोषणार्थं तस्यै पयोव्रतोपदेशः ॥ १ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

ततः सप्तदशेऽदित्या कृते तस्मिन्व्रते हरिः।
तत्कामपूरणायादौ तत्पुत्रोऽभूदितीर्यते ॥ २६ ॥

अदित्या पयोव्रताचरणम् ॥ १ ॥ तद्व्रताचरणतुष्टस्य भगवतस्तद्गर्भे प्रादुर्भावः ॥ २ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

ततस्त्वष्टादशे भूत्वा वामनः सत्कृतोऽखिलैः।
यज्ञं गतस्ततस्तेन सत्कृत्योक्तो वरान्वृणु ॥ २७ ॥

अदितिदेव्यां भगवतो वामनस्यावतारः ॥ १ ॥ पित्रोपनीतस्य तस्य अश्वमेधैर्यजतो बलेर्यज्ञवाटगमनम् ॥ २ ॥ बलिना वामनं सत्कृत्याभिलषितवरदानप्रतिज्ञानम् ॥ ३ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

ऊनविंशे तु हरिणा याचिते च पदत्रये।
प्रतिश्रुते च बलिना जानन्भृगुरवारयत् ॥ २८ ॥

वामनेन बलिप्रशंसनपूर्वकं स्वपदत्रयमितभूयाचनम् ॥ १ ॥ तत्प्रदातुमुद्युक्तस्य बलेः शुक्राचार्येण तस्य वामनस्य विष्णुत्वकथनपूर्वकं भूप्रदाननिषेधः ॥ २ ॥

## विंशोऽध्यायः ॥ २० ॥

विंशे त्वनृतभीतोऽसौ ज्ञात्वाऽपि कपटं हरेः।
ददावेव ततो विष्णुः सहसाऽवर्धताद्भुतम् ॥ २९ ॥

हरेः कपटं ज्ञातवतापि बलिनाऽनृतभयाद्विष्णवे तदपेक्षितपदत्रयमितभूदानम् ॥ १ ॥ प्राप्तपदत्रयेण वामनेन स्वीयविश्वरूपग्रहणेन भूलोकस्यैकेन पदाऽऽक्रमणम् ॥ २ ॥

## एकविंशोऽध्यायः ॥ २१ ॥

एकविंशे पदापूर्तिमिषेण बलिबन्धनम्।
विष्णुना कृतमुत्कर्षं तस्य ख्यापयितुं जने ॥ ३० ॥

द्वितीयेन पदा स्वर्लोकं क्रमतस्त्रिविक्रमस्य ब्रह्मादिदेवैः पादप्रक्षालनम् ॥ १ ॥ वामनं हन्तु मुद्युक्तानामसुराणां विष्णुपार्षदैर्निवारणम् ॥ २ । भगवदभिप्रायज्ञेन गरुडेन बलेर्वारुणपाशैर्बन्धनम् ॥ ३ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

द्वाविंशे तु प्रसन्नः सन् प्रस्थाप्य सुतलं बलिम्।
दत्वा वरान्हरिर्न्यूनं मत्वा तद्द्वारपोऽभवत् ॥ ३१

समर्पिततनूवित्तनिर्मलाचलभक्तितः ।
छलितो बलिना चित्रं स्वमेवार्पयदच्युतः ॥ ३२ ॥

बलिना भगवत्स्तुतिः ॥ १ ॥ प्रह्लादस्य तत्रागमनम् ॥ २ ॥ सप्रह्लादस्य बलेः सुतललोकप्रेषणम् ॥ ३ ॥ हरिणा बलेर्द्वारपालकत्वेन भवनम् ॥ ४ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

त्रयोविंशे बलौ याते सुतलं सपितामहे ।
उपेन्द्रेण दिवं गत्वा पूर्ववन्मोदितो हरिः ॥ ३३ ॥

प्रह्लादेन सह महाबलेः सुतलप्रवेशः ॥ १ ॥ भगवदाज्ञया शुक्राचार्येण यज्ञच्छिद्रसंधानम् ॥ २ ॥ इन्द्रस्य वामनं पुरस्कृत्य स्वर्गलोकगमनम् ॥ ३ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

चतुर्विंशे प्रसङ्गेन मत्स्यरूपस्य शार्ङ्गिणः ।
लीलोच्यते यतः सत्यव्रतरक्षा महार्णवे ॥ ३४

तनुं तनुं विदर्श्यादौ निजैश्वर्यनिदर्शनात् ।
मत्स्ये पृच्छति पृथ्वीशो लीलया वामनोपमम् ॥३५॥

वराहादिकान्भगवतः कांश्चनावतराञ्श्रुतवता राज्ञा मत्स्यावतारकथां वक्तुं प्रार्थितेन शुक्राचार्येण सत्यव्रतकथाकथनपूर्वकं मत्स्यावतारनिरूपणम् ॥ १ ॥

इत्यष्टमः स्कन्धः ॥ ८ ॥

श्रीगोपालकृष्णाय नमः ।

# नवमः स्कन्धः ॥ ९ ॥

त्रिगुणाष्टभिरध्यायैर्वैवस्वतसुतान्वयः । नवमे कृष्णसत्कीर्तिप्रसंगाय वितन्यते ॥ १ ॥
एवमुक्तोऽष्टमस्कन्धे सद्धर्मः सत्वशोधकः । कर्तृपालकवक्त्रादिमन्वादीनां निरूपणैः ॥ २ ॥
सद्धर्मशुद्धसत्त्वानामन्तरङ्गेशसत्कथा । सूर्यसोमान्वयाख्यानैरधुना संगतोच्यते ॥ ३ ॥
त्रयोदशभिरध्यायैः सूर्यवंशोऽनुवर्ण्यते । एकादशभिरध्यायैः सोमवंशस्ततः परैः ॥ ४ ॥

## प्रथमोऽध्यायः ॥ १ ॥

तत्र तु प्रथमेऽध्याये वैवस्वतसुतान्वये ।
सोमवंशप्रवेशोक्त्यै सुद्युम्नस्त्रीत्वमुच्यते ॥ ५ ॥

पूर्वस्कन्धे चतुर्दशमन्वन्तराणि श्रुतवता परीक्षिता शुकाचार्यं प्रति वैवस्वतमनोर्वंशकथनप्रार्थना ॥ १ ॥ श्रीशुकाचार्येण सूर्यवंशकथनारंभः ॥ २ ॥ सूर्यपुत्रस्य श्राद्धदेवस्य मनोः इक्ष्वाकुप्रभृतिपुत्रोत्पत्तेः पूर्वं पुत्रोत्पत्त्यर्थं मैत्रावरुणेष्टिकरणम् ॥ ३ ॥ मनुपत्न्या श्रद्धादेव्या दुहितृजननार्थं प्रार्थितस्य होतुर्मन्त्रविपर्यासेन इलानामककन्योत्पत्तिः ॥ ४ ॥ वसिष्ठाराधितस्य भगवतो वरदानेन इलायाः पुंस्त्वप्राप्तिः ॥ ५ ॥ मृगयार्थं मेरुसमीपस्थं किंचन वनं प्रविष्टस्य सुद्युम्ननामकस्य तस्य स्त्रीत्वप्राप्तिः ॥ ६ ॥ तस्यामिलायां सोमसुताद्बुधात्पुरूरवोनामकपुत्रो-

त्पत्तिः ॥ ७ ॥ ततः शङ्करप्रसादेन तस्याः पुनः मासपर्यायव्यवस्थया स्त्रीपुंसत्वप्राप्तिः ॥ ८ ॥ सुद्युम्नस्य उत्कलादिपुत्रोत्पत्तिः ॥ ९ ॥ पुरूरवसं प्रतिष्ठाननगरेऽभिषिच्य सुद्युम्नस्य तपोवनगमनम् ॥ १० ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वितीये मनुपुत्राणां द्वावपुत्रौ विरागतः ।
करूषकादिपञ्चानां वंशानाह लघुक्रमात् ॥ ६ ॥

ततो वैवस्वतमनोरिक्ष्वाकुप्रभृतिपुत्रोत्पत्तिः ॥ १ ॥ अज्ञानाद्गोवधं कृतवता मनोरष्टमपुत्रेण पृषध्रेण तपोवनगमनम् ॥ २ ॥ इक्ष्वाकुवंशस्य महत्त्वात् लघूनामन्येषां मनुपुत्राणां वंशकथनम् ॥ ३ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

तृतीये मनुपुत्रस्य शर्यातेः कीर्त्यतेऽन्वयः ।
यत्र सौकन्यमाख्यानं रैवतं च महाद्भुतम् ॥ ७ ॥

वैवस्वतमनुपुत्रस्य शर्यातेः तत्पुत्र्याः सुकन्यायास्तद्भर्तुश्च्यवनऋषेश्च कथा ॥ १ ॥ शर्यातिप्रपौत्रस्य ककुद्मिनस्तत्पुत्र्या रेवत्याश्च कथा ॥ २ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थे मनुपुत्रस्य नभगस्य कथोच्यते ।
तत्सूनोश्चाम्बरीषस्य कृत्या प्रतिहता यतः ॥ ८ ॥

मनुपौत्रस्य नाभागस्य कथा ॥ १ ॥ नाभागपुत्रस्याम्बरीषस्य कथा ॥ २ ॥ एकादशीव्रतमनुतिष्ठतोऽम्बरीषस्य द्वादशीपारणसमये दुर्वाससआगमनम् ॥ ३ ॥ स्वपारणवेलातिक्रमभियांबरीषेण अब्भक्षणे कृते क्रुद्धेन ऋषिणा अंबरीषं हन्तुं स्वजटातः कृत्यानिर्माणम् ॥ ४ ॥ तस्य राज्ञो रक्षणार्थं स्थितेन चक्रायुधेन कृत्यां दग्ध्वा ऋषिमपि हन्तुमभिद्रावणम् ॥ ५ ॥ कुत्राप्यलब्धत्राणेन ऋषिणा भगवन्तं प्रति शरणगमनम् ॥ ६ ॥ भगवता नारायणेन स्वभक्तमाहात्म्यप्रकटनार्थं अंबरीषं प्रत्येव शरणगमनचोदना ॥ ७ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे विष्णुचक्रं तु प्रसाद्य प्राणसंकटात् ।
दुर्वासा रक्षितस्तेन तथा तद्वृत्तमीर्यते ॥ ९ ॥

भगवदाज्ञानुसारेण अम्बरीषमागत्य तस्य पादे गृहीतवतो दुर्वाससो रक्षणार्थं अंबरीषेण सुदर्शनस्तुतिः ॥ १ ॥ तत्स्तुतिप्रसन्नेन सुदर्शनेन दुर्वाससो मोचनम् ॥ २ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठारम्भेम्बरीषस्य वंशमुक्त्वा ततः परम् ।
षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥ १० ॥
तत्र षष्ठे शशादादिर्मान्धात्रन्तो निरूप्यते ।
प्रसंगात्सौभरेराख्या मान्धातृतनयापतेः ॥ ११ ॥

अम्बरीषस्य वंशे रथीतरापरनामकानामाङ्गिरसानां ब्राह्मणानां जननम् ॥ १ ॥ मनोर्ज्येष्ठपुत्रस्य इक्ष्वाकोर्वंशे शशादादिमान्धातृपर्यन्तानां राज्ञां कथाकथनम् ॥ २ ॥ प्रसंगान्मान्धातृजामातुः सौभरिऋषेः कथा ॥ ३ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

मान्धातुरन्वयः प्रोक्तः सप्तमे यत्र गीयते ।
पुरुकुत्सस्य चाख्यानं हरिश्चन्द्रस्य चोत्तमम् ॥ १

मान्धातृवंशे पुरुकुत्सस्य त्रिशङ्कोः हरिश्चन्द्रस्य च कथाः ॥ १ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमे रोहितस्योक्तो वंशो यत्राभवन्नृपः ।
सगरः कपिलाक्षेपाग्निर्दग्धा यस्य सूनवः ॥ १३ ॥

हरिश्चन्द्रवंश्यस्य सगरस्य चरित्रम् ॥ १ ॥ तस्य सुमत्यां जाताः षष्टिसहस्राणि पुत्राः कपिलमहर्षेः कोपाग्निना दग्धाः ॥ २ ॥ केशिन्याः पुत्रोऽसमञ्जो योगी अभवत् ॥ ३ ॥

## नवमोऽध्यायः ॥ ९ ॥

नवमेंऽशुमतो वंशः खट्वाङ्गावधि वर्ण्यते ।
गङ्गां भूतलमानिन्ये यस्य पौत्रो भगीरथः ॥ १४ ॥

असमञ्जस्य पौत्रेण भगीरथेन प्रार्थितया गङ्गया भूमाववतरणम् ॥ १ ॥ मदयन्तीपतेः कल्माषपादस्य कथा ॥ २ ॥ खट्वाङ्गपर्यन्तं तद्वंशवर्णनम् ॥ ३ ॥

## दशमोऽध्यायः ॥ १० ॥

दशमे प्राह खट्वाङ्गवंशे श्रीरामसम्भवम् ।
तच्चरित्रं च लङ्केशं हत्वाऽयोध्यागमावधि ॥ १५ ॥

भगीरथवंश्यस्य खट्वाङ्गस्यान्ववाये जातस्य दशरथस्य गृहे श्रीनारायणो राम इति नाम्नाऽवततार ॥ १ ॥ तस्य कथा रावणवधानन्तरमयोध्यां गत्वा पट्टाभिषेकावधिरुक्ता ॥ २ ॥

## एकादशोऽध्यायः ॥ ११ ॥

ततश्चैकादशेऽयोध्यामावसन्ननुजैः सह ।
यज्ञादि यच्चकारेशो रामस्तदनुवर्ण्यते ॥ १६ ॥

बहुभिर्मखैर्यजनपूर्वकं रामस्य भ्रात्रादिभिः सह सुखेनायोध्यायां वासः ॥ १ ॥ तत्कृतराज्यपरिपालनप्रकारकथनम् ॥ २ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते ।
एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वयः ॥ १७ ॥

अतीतानामनागतानां च रामवंश्यानां कथनम् ॥ १ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

इक्ष्वाकोरेव पुत्रस्य निमेर्वंशस्त्रयोदशे ।
वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः ॥ १८ ॥

इक्ष्वाकुतनयस्य निमेः कथाकथनपूर्वकं तद्वंश्यानां ज्ञानिनां जनकादीनां वंशकथनम् ॥ १ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

चतुर्दशादिभिः सोमवंशमाह समासतः ।
यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः ॥ १९ ॥
चतुर्दशे गुरोः पत्न्यां तारायां सोमजाद्बुधात् ।
जातश्चैलः षड्उर्वश्यामायुमुख्यानजीजनत् ॥ २० ॥

एवं षष्ठादित्रयोदशान्तैरष्टभिरध्यायैः इक्ष्वाकोर्वंशमुक्त्वा चन्द्रवंशकथनारंभः ॥ १ ॥ बृहस्पतिभार्यायां तारायां चन्द्राद्बुधोत्पत्तिः ॥ २ ॥ वैवस्वतमनुपुत्र्यां इलायां बुधादुत्पन्नस्य पुरूरवसः उर्वश्यां पुत्रोत्पत्तिः ॥ ३ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

ततः पञ्चदशे गाधिरैलपुत्रान्वयेऽजनि ।
यद्दौहित्रसुतो रामः कार्तवीर्यमहन्नृषा ॥ २१ ॥

पुरूरवसः षट्पुत्राणां मध्ये श्रुतायुप्रभृतीनां पञ्चानां वंशकथनम् ॥ १ ॥ तत्र विजयवंशे गाधिराजस्योत्पत्तिः ॥ २ ॥ तस्य सत्यवतीनामकपुत्र्या उत्पत्तिः ॥ ३ ॥ गाधिदौहित्राज्जमदग्नेर्भगवदंशस्य

परशुरामस्योत्पत्तिः ॥ ४ ॥ परशुरामेण कार्तवीर्यार्जुनहननम् ॥ ५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

षोडशेऽथार्जुनसुतैर्जमदग्नौ हते मुहुः ।
रामात्क्षत्रवधः प्रोक्तो विश्वामित्रस्य चान्वयः ॥२२॥

परशुरामेण पित्राज्ञया मातू रेणुकायाः ज्येष्ठभ्रातॄणां च वधः ॥ १ ॥ परशुरामेण प्रसादितस्य जमदग्नेरनुग्रहेण मृतानां पुनरुज्जीवनम् ॥ २ ॥ कार्तवीर्यार्जुनसुतै रामासन्निधाने जमदग्नेर्वधः॥ ३ ॥ रामेण माहिष्मतीं गत्वा स्वपितृवधं व्याजीकृत्य दुष्टानां क्षत्रियाणां एकविंशतिकृत्वो वधः ॥ ४ ॥ गाधिराजस्य विश्वामित्रनामकपुत्रोत्पत्तिकथाकथनम् । तस्य तपसा ब्राह्मण्यप्राप्तिकथनम् ॥ ५ ॥ विश्वामित्रस्य वंशकथनम् ॥ ६ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

आयोः सप्तदशे त्वैलज्येष्ठपुत्रस्य पञ्चसु ।
सुतेषु क्षत्रवृद्धादिचतुर्णां वंशवर्णनम् ॥ २३ ॥

पुरूरवसो ज्येष्ठपुत्रस्य आयोर्नहुषादिपुत्रपञ्चकोत्पत्तिः ॥ १ ॥ नहुषव्यतिरिक्तानां क्षत्रवृद्धादीनां चतुर्णां पुत्राणां वंशकथनम् ॥ २ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

अष्टादशे ययातेस्तु नाहुषस्य कथोच्यते ।
यस्य पञ्चसु पुत्रेषु कनीयानग्रहीज्जराम् ॥ २४ ॥

नहुषस्य यतिप्रभृतिपुत्रषट्कोत्पत्तिः ॥ १ ॥ द्वितीयपुत्रस्य ययातेः शर्मिष्ठादेवयानीभ्यां विवाहः ॥ २ ॥ देवयान्याः पित्रा शुक्राचार्येण ययातेर्जराप्राप्तिरूपकशापदानम् ॥ ३ ॥ तस्य यदुप्रभृतिपञ्चपुत्रोत्पत्तिः ॥ ४ ॥ पञ्चसु पुत्रेषु कनिष्ठेन पूरुणा ययातेर्जरां गृहीत्वा तस्मै स्वयौवनदानम् ॥ ५ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

ऊनविंशे ययातिः स्वं चेष्टितं नन्वजोपमम् ।
देवयानीं समाश्राव्य विरक्तो मुक्तिमन्वगात् ॥ २५

भुक्तभोगामजां हास्यन्नजवद्वृत्तमात्मनः ।
विडम्बयन्प्रियामाह निर्वेदयितुमात्मवान् ॥ २६ ॥

भोगान्भुक्त्वा प्राप्तनिर्वेदेन ययातिना बस्तजयोः कथाकथनव्याजेन कामिनः स्वस्य नेः विनिन्द्य कनिष्ठं पुत्रं पूरुं राज्येऽभिषिच्य तपोवनगमनम् ॥ १ ॥ तत्र तपस्तप्त्वा तस्योत्तमगतिप्राप्तिः ॥ २ ॥

## विंशोऽध्यायः ॥ २० ॥

विंशे पितृप्रसादाप्तराज्यासनमहोन्नते ।
पूरोर्वंशे हि दौष्यन्तेर्भरतस्योपवर्ण्यते ॥ २७ ॥

पूरोर्वंशकथने दुष्यन्ताच्छकुन्तलायां भरतोत्पत्तिः ॥ १ ॥ प्रसंगात् उचथ्यपत्न्यां ममताः बृहस्पतेः भरद्वाजोत्पत्तिकथनम् ॥ २ ॥ अपुत्रभरताय देवैर्भरद्वाजस्य पुत्रत्वेन दानम् ॥ ३ तस्य वितथ इति नामाजनि ॥ ४ ॥

## एकविंशोऽध्यायः ॥ २१ ॥

एकविंशे तु दौष्यन्तेः सुतस्यान्वय उच्यते ।
रन्तिदेवाजमीढादेर्यत्र कीर्तिः प्रतन्यते ॥ २८ ॥

वितथवंशकथने रन्तिदेवचरित्रवर्णनम् ॥ १ गर्गस्य वंशे गार्ग्यादिब्राह्मणोत्पत्तिः ॥ २ ॥ अजमीढस्य वंशे केषां चित मुद्गलशरद्वत्कृपप्रभृती ब्राह्मणानामुत्पत्तिः ॥ ३ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

द्वाविंशे तु दिवोदासवंशमुक्त्वाऽथ वर्णिताः ।
ऋक्षवंशे जरासन्धपार्थदुर्योधनादयः ॥ २९ ॥

द्रुपदजरासन्धयोर्वंशवर्णनम् ॥ १ ॥ शन्तनूत्पत्तिः ॥ २ ॥ धार्तराष्ट्राणां पाण्डवानां चोत्पत्तिः ॥ ३ ॥ पाण्डववंशे अतीतानामनागतानां च राज्ञां वंशकथनम् । ४ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

त्रयोविंशे त्वनोर्द्रुह्योस्तुर्वसोश्चान्वयः क्रमात् ।
यदोश्च वंशोऽनुक्रान्तो यावज्ज्यामघसंभवः ॥ ३० ॥

ययातिपुत्राणाम् अनुद्रुह्यतुर्वसूनां वंशकथनम् ॥ १ ॥ पुनर्यदुवंशमनुक्रम्य ज्यामघपर्यन्तं वर्णनम् ॥ २ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवाः ।
वंशा नानाविधाः प्रोक्ता रामकृष्णोद्भवावधि ॥३१॥

विदर्भवंशं चेदिवंशं चोक्त्वा सङ्ग्रहेण श्रीकृष्णरामाद्युत्पत्तिकथनम् ॥ १ ॥

इति नवमः स्कन्धः ॥ ९ ॥

---

श्रीगोपालकृष्णाय नमः ॥

# दशमः स्कन्धः पूर्वार्धम् ॥ १० ॥

दशमे दशमं लक्ष्यमाश्रिताश्रयविग्रहम् । क्रीडद्यदुकुलाम्बोधौ परानन्दमुदीर्यते ॥ १ ॥
दशमे कृष्णसत्कीर्तिवितानायानुवर्ण्यते । धर्मग्लानिनिमित्तस्तु निरोधो दुष्टभूभुजाम् ॥ २ ॥
प्राकृतादिश्चतुर्धा यो निरोधः स तु वर्णितः । तत्तत्प्रसंगतः सृष्टिसंहारादि निरूपणैः ॥ ३ ॥
कृता नवतिरध्यायाः दशमे कृष्णकीर्तये । आद्यैश्चतुर्भिरध्यायैर्ब्रह्मप्रार्थनयाऽवनेः ।
भारं हर्तुं हरेर्जन्म सप्रसंगं निरूप्यते ॥ ४ ॥
गोकुले मथुरायां च द्वारवत्यां ततः क्रमात् । कृष्णलीला त्रिधा प्रोक्ता तत्तद्भेदैस्त्वनेकधा ॥
सपञ्चत्रिंशताऽध्यायैर्बृहद्वृन्दावनादिषु । गोकुले वसतो लीला वर्ण्यते सुरदुष्करा ॥ ६ ॥
एकेन यमुनावारिण्यक्रूरेण कृता स्तुतिः । एकादशभिराख्याता लीला मधुवने कृता ॥ ७ ॥
शेषैर्द्वारवतीलीलातन्निर्माणादि वर्ण्यते । एवं नवतिरध्याया दशमे विशदार्थकाः ॥ ८ ॥

## प्रथमोऽध्यायः ॥ १

तत्र तु प्रथमे कंसः स्वमृत्युं देवकीसुतात् ।
श्रुत्वा भीतोऽवधीत्तस्याः षड्गर्भानिति वर्ण्यते ॥९॥
कृष्णावतारचरितश्रवणामृतनिर्वृतः ।
उक्तानुवादेनौत्सुक्याद्राजा पृच्छति तत्पुनः ॥ १०

श्रीकृष्णचरित्रकथनारंभः ॥ १ ॥ देवकीवसुदेवयोर्विवाहः ॥ २ ॥ देवकीहननोद्युक्तस्य कंसस्य वसुदेवेन सामपूर्वकं निवर्तनम् ॥ ३ ॥ कंसेन देवकीवसुदेवयोर्निगडबन्धनम् ॥ ४ ॥ तेन तयोः पुत्रषट्कस्य हननम् ॥ ५ ॥

यमुनां निर्विषां कर्तुं तद्ध्रदमवगाह्य कालियदमनम् ॥ १ ॥ कालियपत्नीभिः श्रीकृष्णस्तुतिः ॥ २ ॥ श्रीकृष्णाज्ञया कालियस्य पुना रमणकद्वीपगमनम् ॥ ३ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

नागं सप्तदशे नागालयं तं निरयापयत् ।
बन्धून्स्वदुःखतः श्रान्तान्सुप्तांस्तत्र दवादपात् ॥३२॥

सर्वैः सर्पैः स्वरक्षणार्थं गरुडाय प्रतिमासं क्लृप्तस्य बलेः दृप्तेन कालियेन स्वयं भोजनम् ॥ १ ॥ तत्कर्मणा क्रुद्धेन गरुडेन ताडितस्य कालियस्य सौभरिऋषिशापात्सुपर्णागम्ये कालिन्दीह्रदे प्रवेशः ॥ २ ॥ इति पूर्वं रमणद्वीपस्थस्य कालियस्य कालिन्दीह्रदागमने कारणकथनम् ॥ ३ ॥ सर्पदंशमुक्तश्रीकृष्णसंप्राप्तितुष्टेन नन्देन ब्राह्मणेभ्यो गोदानादिकरणम् ॥ ४ ॥ श्रीकृष्णेन दावाग्नेर्नन्दमोचनम् ॥ ५ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

अष्टादशे ततो ग्रीष्मे वसन्तगुणलक्षिते ।
अघातयद्बलेनालं प्रलम्बं लीलया हरिः ॥ ३३ ॥

ग्रीष्मर्तुवर्णनम् ॥ १ ॥ बलरामेण प्रलम्बासुरवधः ॥ २ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः ।
मुञ्जारण्यमरण्याग्नेररक्षत्सन्निपानतः ॥ ३४ ॥

श्रीकृष्णादिभिश्चार्यमाणानां गवां मुञ्जाटवीप्रवेशः ॥ १ ॥ ता अन्विष्य गतानां दावाग्निना वेष्टितानां गोपानां श्रीकृष्णेन तस्मान्मोक्षणम् ॥ २ ॥

## विंशोऽध्यायः ॥ २० ॥

विंशे प्रावृट्च्छरच्छोभावर्णनेन वनोचिताः ।
प्रावृट्क्रीडा निरूप्यन्ते गोपरामयुजो हरेः ॥ ३५

वर्षाकालशरत्कालयोर्वर्णनम् ॥ १ ॥

## एकविंशोऽध्यायः ॥ २१ ॥

एकविंशे शरद्रम्यवृन्दावनगते हरौ ।
तद्वेणुस्वनमाकर्ण्य गोपीभिर्गानमीर्यते ॥ ३६ ॥

श्रीकृष्णस्य वेणुगानमाकर्ण्य गोपीभिस्तद्गुणवर्णनम् ॥ १ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

गोपीनां कामतः कृष्णे निःसीमप्रेमसंगमः ।
कात्यायन्यर्चनोद्भूततत्प्रसादमहोदयः ॥ ३७ ॥
द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया ।
वरं दत्वा गतः कृष्णो यज्ञशालामितीर्यते ॥ ३८ ॥

व्रजकुमारीभिः अस्माकं श्रीकृष्णः पतिर्भूयदिति कात्यायनीव्रताचरणम् ॥ १ ॥ श्रीकृष्णे तासां वस्त्रापहरणं वरदानं च ॥ २ ॥ निदाघकाले कृष्णेन सह वने गाश्चारयतां गोपानां बुभुक्षाधिगमः ॥ ३ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

त्रयोविंशे ततो गोपैरन्नयाच्ञापदेशतः ।
तत्पत्न्यनुग्रहात्कृष्णो दीक्षितानन्वतापयत् ॥ ३९

अन्नं प्रार्थयतां गोपानां श्रीकृष्णेन विप्राणयज्ञशालाप्रेषणम् ॥ १ ॥ भगवतोऽन्नकांक्षां श्रुत्वप्युदासीनेषु विप्रेषु श्रीकृष्णेन पुनस्तेषां यज्ञपत्नीर्निवेदयितुं गोपानां प्रेपणम् ॥ २ ॥ द्विजपत्नीभिर्निषेद्धृन्स्वपतीनप्यनादृत्य श्रीकृष्णाय स्वाद्वन्नान

यनम् ॥ ३ ॥ स्वपत्नीनां भगवद्भक्तिं दृष्ट्वा द्विजानामनुतापः ॥ ४ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

चतुर्विंशे महेन्द्रस्य मखं व्यावर्त्य हेतुभिः ।
कृष्णः प्रवर्तयामास गोवर्धनमखोत्सवम् ॥ ४० ॥
भृगुराणां क्रियागर्वं निरस्य स्वःसुरेषु च ।
मघवन्मदभङ्गाय तन्मखं समवारयत् ॥ ४१ ॥

श्रीकृष्णेन इन्द्रमुद्दिश्य नन्दादिभिः क्रियमाणं मखं व्यावर्त्य गोवर्धनपर्वतमुद्दिश्य मखप्रवर्तनम् ॥ १ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

पञ्चविंशे रुषा शक्रे व्रजनाशाय वर्षति ।
उद्धृत्य गिरिमासारादरक्षद्गोकुलं प्रभुः ॥ ४२ ॥

क्रुद्धेनेन्द्रेण गोकुलनाशनार्थं सांवर्तकमेघैर्वर्षणम् ॥ १ ॥ भगवता गोवर्धनाद्रिं करे धृत्वा व्रजवासिनस्तदधः प्रवेश्य वातवर्षभयाद्रक्षणम् ॥ २ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

षड्विंशे विस्मितान्गोपान्कृष्णस्याद्भुतकर्मभिः ।
नन्दो गर्गोक्तिमाश्राव्य तदैश्वर्यमवर्णयत् ॥ ४३ ॥

श्रीकृष्णस्याद्भुतं कर्म वीक्ष्य विस्मितैर्नन्दादिभिस्तत्सामर्थ्यानुवर्णनम् ॥ १ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

सप्तविंशे तदालक्ष्य कृष्णस्य प्राभवं वरम् ।
वर्ण्यते सुरभीन्द्राभ्यामभिषेकमहोत्सवः ॥ ४४ ॥

इन्द्रेण श्रीकृष्णं स्तुत्वा गोलोकादागतया सुरभ्या सह श्रीकृष्णस्याभिषेकः ॥ १ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

अष्टाविंशे ततो नन्दानयनं वरुणालयात् ।
वैकुण्ठदर्शनं चाथ गोपानामनुवर्ण्यते ॥ ४५ ॥

वरुणभृत्यानीतस्य नन्दस्य श्रीकृष्णेनानयनम् ॥१॥ भगवता गोपेभ्यो वैकुण्ठलोकप्रदर्शनम् ॥२॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

ऊनत्रिंशे तु रासार्थमुक्तिप्रत्युक्तयो हरेः ।
गोपीभी राससंरंभे तस्य चान्तर्धिकौतुकम् ॥ ४६ ॥
ब्रह्मादिजयसंरूढदर्पकन्दर्पदर्पहा ।
जयति श्रीपतिर्गोपीरासमण्डलमण्डनः ॥ ४७ ॥

गोपीभिस्सह श्रीकृष्णस्य रासक्रीडारंभः ॥ १ ॥ गोपीनां गर्वपरिहारार्थं क्रीडामध्ये श्रीकृष्णस्यान्तर्धानम् ॥ २ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

इत आरभ्य रासपञ्चाध्यायी ।

त्रिंशे विरहसंतप्तगोपीभिः कृष्णमार्गणम् ।
उन्मत्तवन्नियतं भ्रमन्तीभिर्वने वने ॥ ४८ ॥

श्रीकृष्णविरहसंतप्तानां गोपीनां तमन्विष्येतस्ततो धावनम् ॥ १ ॥ तासामुन्मादावस्थावर्णनम् ॥ २ ॥ मध्येमार्गं दामोदरपादाङ्केन सह कस्याश्चित्पदाङ्कमपि दृष्ट्वा तासामधिकतापप्राप्तिः ॥ ३ ॥ दृप्तायास्तस्या अपि गर्वभङ्गार्थं श्रीकृष्णेन त्यागः ॥ ४ ॥ तया पूर्वविसृष्टाभिर्गोपीभिः सह यमुनापुलिने श्रीकृष्णप्रतीक्षणम् ॥ ५ ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

एकत्रिंशे निराशास्ताः पुनः पुलिनमागताः ।
कृष्णमेवानुगायन्त्यः प्रार्थयन्ते तदागमम् ॥ ४९ ॥

गोपीगीतम् ॥ १ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः ।
तत्राविर्भूय गोपीस्ताः सान्त्वयामास मानयन् ॥५०॥
स्वप्रेमामृतकल्लोलविह्वलीकृतचेतसः ।
सदयं नन्दयन्गोपीरुद्गतो नन्दनन्दनः ॥ ५१ ॥

शोचतां गोपीनां मध्ये श्रीकृष्णस्य प्रादुर्भावः ॥ १ ॥

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

त्रयस्त्रिंशे ततो गोपीमण्डलीमध्यगो हरिः ।
प्रियास्ता रमयामास ह्लादिनीवनकेलिभिः ॥ ५२ ॥

श्रीकृष्णस्य गोपिकाभिस्सह रासक्रीडावर्णनम् ॥ १ ॥ गोपीभिः सह श्रीकृष्णस्य जलक्रीडा ॥ २ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

चतुस्त्रिंशेऽहिना ग्रस्तं नन्दं हरिरमूमुचत् ।
विद्याध्रं चाङ्गिरःशापाच्छङ्खचूडं तथाऽवधीत् ॥५३॥
रासापदेशतः कामं किङ्करीकृत्य कामतः ।
अनुगृह्णन्वशं निन्ये तथा विद्याधराधिपम् ॥ ५४ ॥

सर्पग्रस्तस्य नन्दस्य श्रीकृष्णेन मोचनम् ॥ १ ॥ अङ्गिरसां ऋषीणां शापात्सर्पजन्म प्राप्तस्य सुदर्शननामकविद्याधरस्य श्रीकृष्णेन स्वपादस्पर्शेन तज्जन्मनो मोक्षणम् ॥ २ ॥ कस्यां चिद्रात्र्यां गोपीभिः समं वने विहरतो रामकृष्णयोः शङ्खचूडनाम्ना गुह्यकेन स्त्रीणां भयोत्पादने कृष्णेन तस्य शिरःकर्तनम् ॥ ३ ॥

इति रासपञ्चाध्यायी ।

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

पञ्चत्रिंशे वनं याते कृष्णे गोकुलयोषितः ।
युग्मश्लोकानुगीतेन निन्युर्दुःखेन वासरान् ॥ ५५ ॥

गोपिकायुगलगीतम् ॥ १ ॥ इयमेव वे[...] गीता ॥

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

षट्त्रिंशे तु हतेऽरिष्टे नारदोक्त्या बलाच्युतौ ।
वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत् ॥ ५६
गोपीरासान्तरायान्तं शङ्खचूडं निहत्य सः ।
अहन्गोपीमहानन्दासहं दुष्टमरिष्टकम् ॥ ५७ ॥

अरिष्टनामकवृषभासुरवधः ॥ १ ॥ नार[...] कंसाय श्रीकृष्णबलरामयोः देवकीरोहिणीपुत्र[...] कथनम् ॥ २ ॥ [विजयध्वजीयपाठे कंसेन स्वस्[...] कान्प्रति स्वमातरि द्रुमिलनामकगन्धर्वात् स्वस्[...]त्पत्तिकथाकथनम् ॥ ३ ॥] श्रीकृष्णरामयोरान[...]नार्थं कंसेनाक्रूरप्रेषणम् ॥ ४ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

सप्तत्रिंशे हते केशिन्यच्युतो भाविकर्मभिः ।
नारदेन स्तुतः क्रीडन्व्योमासुरमथावधीत् ॥ ५८
वृषवेषासुरं यद्वत्केशिनं हयवेषिणम् ।
कंसप्राणसखं हत्वा कंसं व्यसुमिवाकरोत् ॥ ५९

श्रीकृष्णेन केशिनामकहयरूपासुरवधः ॥ १ नारदेन कृष्णेन करिष्यमाणकार्यैः तत्स्तुतिः ॥ निलायनक्रीडायां व्योमनाम्नोऽसुरस्य क्र[...] वधः ॥ ३ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

अष्टत्रिंशे यथा ध्यायन्नक्रूरो गोकुलं गतः ।
तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृतः ॥ [...]
प्रातः केशिवधे वृत्ते द्वादश्यां निर्गते मुनौ ।
ततो व्योम्नि हतेऽक्रूरः सायं गोकुलमागमत् ॥

अक्रूरस्य नन्दगोकुलगमनम् ॥ १ ॥

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोक्तयः ।
अक्रूरेणाथ कालिन्द्यां विष्णुलोकस्य दर्शनम् ॥ ६२॥

अक्रूरस्य रामकृष्णाभ्यां सह रात्रौ भोजनं संवादश्च ॥ १ ॥ श्रीकृष्णस्य मथुरागमनं श्रुतवतां गोपिकानां व्यसनोक्तयः ॥ २ ॥ कालिन्द्यां स्नानार्थं मग्नेनाक्रूरेण जलान्तर्विष्णुलोकदर्शनम् ॥३॥

## चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

चत्वारिंशे ततोऽक्रूरः कृष्णं सर्वेश्वरेश्वरम् ।
प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः ॥ ६३ ॥

अक्रूरेण भगवत्स्तुतिः ॥ १ ॥

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

एकचत्वारिंशकेऽहत्रजकं प्रविशन्पुरीम् ।
ततो वरानदात्तुष्ट सुदाम्नो वायकस्य च ॥ ६४ ॥

सशङ्कमक्रूरमनः प्रबोध्य स्वधामसन्दर्शनसत्कृपातः।
स्वराजधानीं मधुरामपश्यदलंकृतानन्तमहोत्सवा-
ढ्याम् ॥ ६५ ॥

श्रीकृष्णस्य मधुरापुरीप्रवेशः ॥ १ ॥ मधुरापुरस्त्रीणां श्रीकृष्णदर्शने प्रेमातिशयवर्णनम् ॥ २ ॥ श्रीकृष्णेन रजकस्य वधः ॥ ३ ॥ वायकसुदामभ्यां वरदानम् ॥ ४ ॥

## द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

द्विचत्वारिंशके कुब्जोन्नमनं धनुषो भिदा ।
वधस्तद्रक्षिणां कंसारिष्टं रङ्गोत्सवादि च ॥ ६६ ॥

कुब्जाऋज्वङ्गकरणम् ॥ १ ॥ कंसधनुर्भङ्गकरणम् ॥ २ ॥ तद्रक्षिणां वधः ॥ ३ ॥ कंसस्यारिष्टदर्शनम् ॥ ४ ॥ परेऽहनि प्रातर्नन्दादीनां रङ्गप्रवेशः ॥ ५ ॥

## त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

त्रिचत्वारिंशके हत्वा गजेन्द्रं रामकृष्णयोः ।
रङ्गप्रवेशसौभाग्यं चाणूरेण च भाषणम् ॥ ६७ ॥

कुवलयापीडवधः ॥ १ ॥ रङ्गप्रविष्टयो रामकेशवयोर्वर्णनम् ॥ २ ॥ तयोश्चाणूरेण सह भाषणम् ॥ ३ ॥

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् ।
कंसयोषित्समाश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥६८॥

चाणूरमुष्टिकादिवधः ॥ १ ॥ कंसवधः ॥ २ ॥ कंसानुजानां वधः ॥ ३ ॥ कंसस्त्रीणां समाश्वासनम् ॥ ४ ॥ पित्रोर्बन्धनान्मोचनम् ॥ ५ ॥ देवकीवसुदेवयोः सान्त्वनम् ॥ ६ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

पञ्चचत्वारिंशकेऽथ पितृनन्दादिसान्त्वनम् ।
उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः ॥ ६९ ॥

श्रीकृष्णेन देवकीवसुदेवयोः सान्त्वनम् ॥ १ ॥ उग्रसेनस्य राज्येऽभिषेकः ॥ २ ॥ यशोदानन्दयोः सान्त्वनम् ॥ ३ ॥ श्रीकृष्णरामयोः उपनयनसंस्कारः ॥ ४ ॥ तयास्सान्दीपिन्याचार्याद्विद्याभ्यासः ॥५॥ श्रीकृष्णेन मृतगुरुपुत्रानयनम् ॥६॥

## षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तद्गिरा ।
यशोदानन्दयोश्चक्रे कृष्णः शोकापनोदनम् ॥ ७० ॥
कामचारं द्विजातिः सन्परित्यज्यातिसंयतः ।
गुरोर्ज्ञानमनुप्राप्य सख्या गोपीरुपादिशत् ॥ ७१ ॥

उद्धवं गोकुलं संप्रेष्य यशोदानन्दयोः शोकापनोदनम् ॥ १ ॥

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

सप्तचत्वारिंशकेऽथ कृष्णादेशेन गोपिकाः ।
बोधयित्वोद्धवस्तत्रस्थमनुज्ञाप्यागमत्पुरीम् ॥ ७२ ॥

भ्रमरगीता ॥ १ ॥ उद्धवेन श्रीकृष्णाज्ञया गोपीनां तत्वज्ञानमुपदिश्य मधुरागमनम् ॥ २ ॥

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत् ।
अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत् ॥ ७३ ॥
सैरन्ध्रीकाममापूर्य पूरयित्वा मनोरथान् ।
अक्रूरस्य ततः कृष्णस्तेन पार्थानमान्त्वयत् ॥ ७४ ॥

श्रीकृष्णेन त्रिवक्राया गृहगमनम् ॥ २ अक्रूरगृहगमनम् ॥ २ ॥ तस्य हास्तिनपुरीप्रे णम् ॥ ३ ॥

## एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

ऊनपञ्चाशत्तमे तु गत्वाऽक्रूरो गजाह्वयम् ।
राज्ञः स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत् ॥ ७५

हास्तिनपुरं प्राप्तवताऽक्रूरेण धृतराष्ट्रस्य पाण्ड विषमां बुद्धिं ज्ञात्वा मधुरागमनम् ॥ १ ॥

दशमस्कन्धे पूर्वार्धं संपूर्णम् ॥

श्रीगोपालकृष्णाय नमः ।

# दशमः स्कन्धः उत्तरार्धम् ॥ १० ॥

ततः पञ्चाशत्तमे तु जरासन्धभयादिव । कारयित्वाम्बुधौ दुर्गं तन्निनाय निजं जनम् ॥ १ ॥
कपटान्कपटैरेव हत्वा दैत्यानयत्नतः । अजयच्च जरासन्धं धर्मेणैव तु धार्मिकम् ॥ २ ॥

## पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

कंसभार्याभ्यां स्वपितरं जरासन्धं प्रति कृष्णकृतस्वभर्तृवधकथनम् ॥ १ ॥ क्रुद्धस्य जरासन्धस्य सर्वयादवसंहारार्थं त्रिंशत्यक्षौहिण्या सह मथुरागमनम् ॥ २ ॥ तद्दृष्ट्वा "इदानीमस्य वधो नोचितः अयं त्वागतः किमस्माभिः करणीयम्" इति कृष्णस्य चिन्ता ॥ ३ ॥ [एवं ध्यायति गोविंदे जरासन्धपर्क्षीयैः मधुरायाः सर्वद्वारनिरोधः ।] ॥ ४ ॥ तदानीमाकाशात् रथद्वयस्य स्वायुधानां चोपस्थानम् ॥ ५ ॥ श्रीकृष्णरामयोः जरासन्धसैन्येन युद्धम् ॥ ६ ॥ बलरामे जरासन्धं जीवग्राहं गृहीत्वा पोथयितुमारब्धे "इदानीं तस्य वधो मास्तु" कृष्णेन निवारणम् ॥ ७ ॥ मगधेन्द्रस्य आयोगतं कोशवाहनादि वित्तं गृहीत्वा रामकृष्णा यदुराजायोग्रसेनाय समर्पणम् ॥ ८ ॥

[अत्र विजयध्वजीयपाठे (४९) एकोनपञ्चाशत्तमत्वेन अध्यायविच्छेदः ॥ स तु श्रीधरादि नास्ति ।

अपि च एतदनन्तरं विजयध्वजीयपाठे च पण्ण्यधिकैकशतश्लोकात्मकाः किंचिदधिकत्र ध्यायाश्चाधिका दृश्यन्ते । तेषां कथासङ्ग्रहा त्थम्—

विजयध्वजीयपाठे पञ्चाशत्तमोऽध्यायः ॥ ५

जीवन्गच्छेति बलरामविसृष्टस्य जरासन्धस्य पूर्वापेक्षयाप्यधिकसैन्यमेलनेन श्रीकृष्णेनसहयुद्धायागत्य सायं यमुनातटेऽवस्थानम् ॥ १ ॥ श्रीकृष्णरामाभ्यां रात्र्यामालोच्य सूर्योदयसमये सैन्येन सह प्रसुप्तमागधसैन्ये प्रवेशः ॥ २ ॥ श्रीकृष्णेन बलरामादिभिश्च हन्यमानायाः कर्तव्यमूढाया जरासन्धसेनायाः पलायनम् ॥ ३ ॥ तैस्तत्र त्यक्तस्य वाहनावरोधहिरण्याभरणादिरूपस्य धनस्य यदुराजाय समर्पणम् ॥ ४ ॥

## विजयध्वजीयपाठे एकपञ्चाशत्तमोऽध्यायः ॥५१॥

बाणासुरं सहायं वरीतुं जरासन्धस्य शोणितपुरगमनम् ॥ १ ॥ तत्प्रेषिताभ्यां कुम्भाण्डकूपकर्णाभ्यां तन्मन्त्रिभ्यां सहागत्य मथुरां निरुध्य युद्धारम्भः ॥ २ ॥ बलरामजरासन्धयोर्द्वन्द्वयुद्धम् ॥ ३ ॥ प्राणसंशयं प्राप्तयोः कुम्भाण्डकूपकर्णयोः जरासन्धमनापृच्छयैव पलायनम् ॥ ४ ॥

## विजयध्वजीयपाठे द्विपञ्चाशत्तमोऽध्यायः ॥५२॥

जरासन्धं मौलौ गृहीत्वा मुसलेन हन्तुमिच्छता बलरामेण "त्वयाऽयं न वध्यः" इत्यशरीरवाणीं श्रुत्वा विसर्जनम् ॥ १ ॥ पराजितस्य जरासन्धस्य स्वपुरगमनम् ॥ २ ॥ शत्रुं विजित्य स्वपुरीं प्राप्तस्य कृष्णस्य दुर्गान्वेषणार्थं रामेण सह गोमन्तगमनम् ॥ ३ ॥ मध्येमार्गं परशुरामदर्शनम् ॥ ४ ॥ तदाज्ञां गृहीत्वा गच्छता श्रीकृष्णेन करवीरपुरे शृगालवासुदेवस्य वधः ॥ ५ ॥

## विजयध्वजीयपाठे त्रिपञ्चाशत्तमोऽध्यायः ॥५३॥

रामकृष्णयोः गोमन्तकपर्वतारोहणम् ॥ १ ॥ अत्रान्तरे महाबलिना श्वेतद्वीपं गत्वा भगवतः किरीटापहारः ॥ २ ॥ तं जित्वा किरीटमादाय गच्छता गरुडेन मध्येमार्गं गोमन्ते स्थितस्य श्रीकृष्णस्य शिरसि तत्किरीटसमर्पणम् ॥ ३ ॥ ततो रामकृष्णयोर्मथुरागमनम् ॥ ४ ॥ पुनर्युद्धायागतस्य जरासन्धस्य पराजयः ॥ ५ ॥

एतावता प्रबन्धेनास्मिन्नध्याये १४ श्लोकाः संपन्नाः । इतः परमुभयत्र समाः ॥

विजयध्वजीयेतरेषु पाठेषु ।
पञ्चाशत्तमाध्यायशेषः ॥ ५० ॥
विजयध्वजीयेतु ५३ अध्यायशेषः ॥



अत्रान्तरे नारदप्रेषितेन कालयवनेन कोटित्रयसंख्याकेन यवनानां सैन्येन सह मथुरानिरोधायागमनम् ॥ ९ ॥ तद्दृष्ट्वा कालयवनात् जरासन्धाच्चागतां यादवानामापदं विचिन्त्य कृष्णेन समुद्रमध्ये दुर्गकरणं निश्चित्य द्वारकानिर्माणम् ॥ १० ॥ मथुरातः सर्वेषां स्वीयानां तत्र प्रेषणम् ॥ ११ ॥ निरायुधेन कृष्णेन कालयवनवञ्चनार्थं पलायनम् ॥ १२ ॥

## एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

एकपञ्चाशत्तमेऽहन्मुचुकुन्ददृशा हरिः ।
यवनं मुचुकुन्देन स्तुतः सन्नन्वकम्पत ॥ २ ॥
यवनेन्द्रसुतात्कालयवनाद्वुर्भीषणात् ।
हरिर्हरगिरः स्वैरं पालनाय पलायत ॥ ३ ॥

पलायमानस्य कृष्णस्य कालयवनेनानुधावनम् ॥ १ ॥ कां चिद्गिरिगुहां प्रविष्टेन श्रीकृष्णेन तत्र चिरं सुप्तेन मुचुकुन्देन कालयवनघातनम् ॥ २ ॥ मुचुकुन्दकृता श्रीकृष्णस्तुतिः ॥ ३ ॥

## द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

द्विपञ्चाशत्तमे धावन्भयादिव गतः पुरीम् ।
अन्वमोदत संदेशं रुक्मिण्या द्विजवर्णितम् ॥ ४ ॥

यवनं घातयित्वा परावृत्य मथुरां प्राप्तेन कृष्णेन यवनसैन्यवधपूर्वकं तदीयधनस्य द्वारकानयनम् ॥ १ ॥ पुनर्जरासंधस्य युद्धायागमनम् ॥ २ ॥ तं दृष्ट्वा श्रीकृष्णरामयोर्गोमन्तपर्वतगमनम् ॥ ३ ॥ तौ हन्तुं जरासन्धेन प्रदीपितात्पर्वतात् उत्प्लुत्य तयोर्द्वारकागमनम् ॥ ४ । [ विजयध्वजीयपाठे पाण्डवदर्शनार्थश्रीकृष्णेन कृतवर्मप्रेषणम् । रेवतेन स्वपुत्र्या रेवत्याः वरं प्रष्टुं ब्रह्मसभागमनम् । ब्रह्मचोदितेन रेव-

तेन रेवत्याः बलरामाय प्रदानम् ॥] भीष्मकराज कथा ॥ ५ ॥ रुक्मिण्या श्रीकृष्णाय पत्रिकाप्रेषणम् ॥ ६ ॥

## त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

त्रिपञ्चाशत्तमे गत्वा विदर्भानच्युतेरितः ।
रुक्मिणीमहरत्कृष्णो मिषतां द्विषतां बलात् ॥ ५ ॥

श्रीकृष्णस्य विदर्भनगरगमनम् ॥ १ ॥ रुक्मिणीहरणम् ॥ २ ॥

## चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

चतुष्पञ्चाशत्तमे तु जित्वा राज्ञोऽरिपक्षगान् ।
रुक्मिणं च विरूप्याथ भैष्म्याः पाणिं पुरेऽग्रहीत् ॥

युद्धार्थमागतानां रुक्मिपक्षीयानां राज्ञां श्रीकृष्णेन पराजयपूर्वकं रुक्मिणो विरूपकरणम् ॥ १ ॥ द्वारकायां रुक्मिणीविवाहमहोत्सवः ॥ २ ॥

## पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

पञ्चपञ्चाशत्तमे तु प्रद्युम्नोऽजनि कृष्णतः ।
शम्बरेण हृतः सोऽथ हत्वा तं कान्तयाऽऽगतम् ॥७॥
प्रद्युम्नहानिलाभाद्यैः शम्बराहरणादिना ।
कुटुम्बिनामपत्यादिसुखदुःखमसूसुचत् ॥ ८ ॥

श्रीकृष्णस्य [श्रीशङ्करमाराध्य] रुक्मिण्यां प्रद्युम्नोत्पत्तिः ॥ १ ॥ जातमात्रस्य तस्य शम्बरासुरेणापहारः ॥ २ ॥ तत्र स्थितया मायावतीनाम्न्या रतिदेव्या स्वभर्तुः प्रद्युम्नस्य पोषणम् ॥ ३ ॥ मायावत्याः सकाशात्प्राप्तमहामायस्य प्रद्युम्नस्य शंबरवधपूर्वकं तया सह द्वारकामागत्य रुक्मिण्या अन्तःपुरप्रवेशः ॥ ४ ॥ पूर्वमदर्शनं गतस्य प्रद्युम्नस्य प्राप्त्या श्रीकृष्णरुक्मिण्यादीनां हर्षप्राप्तिः ॥ ५ ॥

## षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

षट्पञ्चाशत्तमे मिथ्याऽभियोगे मणिमाहरत् ।
कन्यां जाम्बवतः प्राप कृष्णः सत्राजितस्ततः ॥ '
पुत्रादिकामसौख्यस्य निष्ठामुक्त्वाऽतिचञ्चलाम
अर्थस्यानर्थतामाह स्यमन्तहरणादिना ॥ १० ॥

सत्राजितः सूर्यमाराध्य स्यमन्तकाख्यं म लेभे ॥ १ ॥ प्रसेनस्तं मणिं कण्ठे धृत्वा मृगयामाचरत् ॥ २ ॥ सिंहस्तं हत्वा मणिमाद गतः ॥ ३ ॥ गच्छन्तं सिंहं जाम्बवान्हत्वा म कुमारस्य क्रीडनं चक्रे ॥ ४ ॥ कृष्णः स्वस्य गतमपयशो मार्ष्टुं वनं गत्वा जाम्बवन्तं युद्धेऽज ॥ ५ ॥ जांबवता स्वापराधं परिहर्तुं श्रीकृष्ण मणिनामह जांबवतीप्रदानम् ॥ ३ ॥ श्रीकृष्ण सत्यभामाविवाहः ॥ ७ ॥

## सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

सप्तपञ्चाशत्तमे तु पुनः शतधनोर्वधे ।
प्राप्तं स्म दुर्यशो मार्ष्टि कृष्णोऽक्रूराहृतान्मणेः ॥१
अक्रूरमुररीकृत्य मणेः पात्रमथाच्युतः ।
उपामन्त्र्य तमेकान्ते स रामोऽगाद्गजाह्वयम् ॥ १

कदाचित्कृष्णे हास्तिनपुरं गते शतधन्वना सत्र जितो वधः ॥ १ ॥ श्रीकृष्णेन शतधन्वनो व ॥ २ ॥ श्रीकृष्णेनाक्रूराय स्यमन्तकमणिद नम् ॥ ३ ॥

## अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

अष्टपञ्चाशत्तमे तु कृष्णः पञ्च करेऽग्रहीत् ।
कालिन्दीं मित्रविन्दां च सत्यां भद्रां च लक्ष्मणाम
कालिन्दीं द्विजलाभाय तपः परमुपेयुषीम् ।
परिणेष्यन्प्रियावासमिन्द्रप्रस्थमथागमत् ॥ १४ ॥

श्रीकृष्णस्य कालिन्दीमित्रविन्दादीनां विवाहः ॥ १ ॥

## ऊनषष्टितमोऽध्यायः ॥ ५९ ॥

ऊनषष्टितमे भौमं हत्वा तेनाहृता हरिः ।
कन्याः सहस्रशः प्राप पारिजातं दिवोऽहरत् ॥१५॥

परिणीय ततस्ताभिस्तन्मनोरथपूरणैः ।
आत्मारामोऽप्यसौ रेमे तद्गेहेषु गृहस्थवत् ॥ १६ ॥

श्रीकृष्णेन नरकासुरवधः ॥ १ ॥ तत्र स्थितानां षोडशसहस्रकन्यानां द्वारवतीप्रेषणम् ॥ २ ॥ इन्द्रलोकं गत्वा अदित्यै कुण्डलदानं पारिजातहरणं च ॥ ३ ॥ श्रीकृष्णस्य द्वारकां प्रत्यागत्य शतोत्तराः षोडशसहस्रस्त्रिय उदुह्य ताभी रमणम् ॥ ४ ॥

[पूर्वाध्याये नरकासुरवधानन्तरं विद्यमानानां पारिजातापहरणप्रतिपादकानां चतुर्णां श्लोकानां प्रतिनिधितया विजयध्वजीयपाठे अध्यायत्रयमस्ति]

### विजयध्वजीयपाठे पञ्चषष्टितमोऽध्यायः ॥६५॥

नरकासुरवधानन्तरम् अदित्यै कुण्डले दातुं सत्यभामया सह श्रीकृष्णस्येन्द्रलोकगमनम् ॥ १ ॥ तत्र शचीपुरंदराभ्यां पूजितस्य श्रीकृष्णस्य अदित्या गृहगमनम् ॥ २ ॥ सत्यभामया श्वश्र्वै नरकासुरापहृतयोः कुण्डलयोः समर्पणम् ॥ ३ ॥ ततः प्रतिनिवृत्तयोस्तयोर्दम्पत्योर्मार्गे नन्दनवनदर्शनम् ॥ ४ ॥ सत्यभामाप्रार्थितेन कृष्णेन पारिजातापहरणम् ॥ ५ ॥ वनरक्षकैर्निवेदितपारिजातहरणवृत्तान्तस्येन्द्रस्य दिक्पालकैः सह युद्धायागमनम् ॥ ६ ॥

### विजयध्वजीयपाठे षट्षष्टितमोऽध्यायः ॥६६॥

आगतैर्देवैः सह शार्ङ्गहस्तायाः सत्यभामाया युद्धम् ॥१॥ तया कुबेरेण सह युद्धे तत्कार्मुकच्छेदः ॥ २ ॥ एवं कुबेरं जितवत्याः सत्यभामायाः प्रशंसनपूर्वकं श्रीकृष्णस्य देवैः सह युद्धारम्भः ॥ ३ ॥ गरुडेन वरुणपराजयः ॥ ४ ॥ कृष्णेन त्रिशूलिनः पराजयः ॥ ५ ॥

### विजयध्वजीयपाठे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

श्रीकृष्णेन महेन्द्रपराजयः ॥ १ ॥ इन्द्रेण श्रीकृष्णसत्यभामयोः सान्त्वनम् ॥ २ ॥ श्रीकृष्णस्य द्वारकागमनम् ॥३॥ सत्यभामायाः गृहप्राङ्गणे पारिजाततरुस्थापनम् ॥ ४ ॥

## षष्टितमोऽध्यायः ॥ ६० ॥

अथ षष्टितमे कृष्णः परिहासेन रुक्मिणीम् ।
कोपयित्वा ततः प्रेमकलहे तामसान्त्वयत् ॥ १७ ॥

रामारामजनानन्दमहोदयविडम्बनैः ।
रुक्मिण्याःप्रेमकलहच्छद्मनैश्वर्यमीर्यते ॥ १८ ॥

श्रीकृष्णरुक्मिण्योः प्रेमकलहः ॥ १ ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

एकषष्टितमे शौरेः पुत्रपौत्रादिसंततिः ।
अनिरुद्धविवाहे च रुक्मिणो रामतो वधः ॥ १९ ॥

अष्टाधिकशतद्व्यष्टसहस्रस्त्रीसमुद्भवान् ।
कोटिशः पुत्रपौत्रादीन्हरिर्दारैरयोजयत् ॥ २० ॥

श्रीकृष्णस्य पुत्रपौत्रादिसन्ततिकथनम् ॥ १ ॥ अनिरुद्धस्य विवाहः ॥ २ ॥ बलरामेण रुक्मिणो वधः ॥ ३ ॥

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

द्वियुक्षष्टितमे प्रोक्तमनिरुद्धस्य रोधनम् ।
कन्यया रममाणस्य बाणेन बहुबाहुना ॥ २१ ॥

अनिरुद्धोद्वहेऽन्यस्मिन्बाणयादवसंयुगे ।
श्रीकृष्णः श्रीहरं जित्वा बाणबाहूनथाच्छिनत् ॥२२॥

कदाचिदनिरुद्धेन बाणासुरपुत्र्या उषया सह स्वप्नावस्थायां रमणम् ॥ १ ॥ तत उषायाः सख्या चित्रलेखया अनिरुद्धस्यानयनम् ॥ २ ॥ उषया प्रच्छन्नं रममाणस्य अनिरुद्धस्य बाणासुरेण बन्धनम् ॥ ३ ॥

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

त्रियुक्षष्टितमे चाथ बाणयादवसंगरे ।
स्तुतिर्ज्वरेण रौद्रेण बाणबाहुभिदो हरेः ॥ २३ ॥

नारदाद्विदितवृत्तान्तेन श्रीकृष्णेन शोणितपुरं गत्वा माहेश्वरज्वरपराजयः ॥ १ ॥ बाणासुरबाहुच्छेदपूर्वकं ऊषया सहितस्य अनिरुद्धस्य स्वपुरं प्रत्यानयनम् ॥ २ ॥

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

चतुष्षष्टितमे कृष्णो नृगं पापादमोचयत् ।
ब्रह्मस्वहारिदोषोक्त्या राज्ञो दूतानशिक्षयत् ॥ २४ ॥
विभूतिभाग्यभोगादिमदोन्नद्धमनोरथान् ।
अन्वशासद्यदून्कृष्णो नृगोद्धारप्रसंगतः ॥ २५ ॥

[विजयध्वजीयपाठे वनवासगतान्पाण्डवान्द्रष्टुं श्रीकृष्णस्य वनगमनं सुभद्रादीनामानयनं च ॥ १ ॥] नृगोपाख्यानम् ॥ २ ॥

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

पञ्चषष्टितमे रामश्चक्रे गोकुलमागतः ।
रममाणस्तु गोपीभिः कालिन्द्याः कर्षणं मदात् ॥२६॥
रामस्य चरितं चित्रं कालिन्द्याकर्षणादि यत् ।
पौण्ड्रकान्तादि कृष्णस्य पृथगुक्तमतःपरम् ॥ २७॥

बलरामस्य नन्दगोकुलगमनम् ॥ १ ॥ यमुनातीरे गोपीभिः सह बलरामस्य क्रीडा ॥ २॥ कालिन्द्याकर्षणम् ॥ ३ ॥

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

षड्युक्षष्टितमे काशीं गत्वाऽहन्पौण्ड्रकं हरिः ।
तन्मित्रं च ततो वृत्तं सुदक्षिणवधादिकम् ॥ २८ ॥

[विजयध्वजीयपाठे पौण्ड्रकवासुदेवस्योत्पत्तिकथनम् ॥ १ ॥] श्रीकृष्णेन पौण्ड्रकवधः सुदक्षिणवधश्च ॥ २ ॥

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

सप्तषष्टितमे रामो गिरौ रैवतके मदात् ।
स्वैरं युवतिभिः क्रीडन्नवधीद्द्विविदं खलम् ॥ २९ ॥

कदाचिद्रैवतके गिरौ बलरामे स्त्रीभिः सह क्रीडति तत्रागतेन द्विविदाख्येन वानरेण स्त्रीणां त्रासनम् ॥ १ ॥ तद्दृष्ट्वा क्रुद्धेन रामेण तस्य वधः ॥ २ ॥

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

अष्टषष्टितमे साम्बे निरुद्धे कौरवैर्युधि ।
तद्विमोक्षाय रामेण गजाह्वयविकर्षणम् ॥ ३० ॥

स्वयंवरस्थां दुर्योधनपुत्रीं लक्ष्मणां हृतवतो जांबवतीपुत्रस्य सांबस्य कौरवैर्बन्धनम् ॥ १ ॥ तन्मोचनार्थं गतेन रामेण गङ्गायां पातयितुं लाङ्गलाग्रेण हास्तिनपुरविकर्षणम् ॥ २ ॥

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

एकोनसप्ततितमे गार्हस्थ्यं प्रतिमन्दिरम् ।
कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततः स्तुवन्॥३१

नारदेन द्वारकां गत्वा प्रतिमन्दिरं श्रीकृष्णगार्हस्थ्यदर्शनम् ॥ १ ॥

## सप्ततितमोऽध्यायः ॥ ७० ॥

ततस्तु सप्ततितमे कृष्णस्याह्निककर्मणि ।
दूतनारदयोः कार्ये कार्यमन्त्रविचारणम् ॥ ३२ ॥
जगन्मङ्गलचारित्रमाह्निकं जगदीशितुः ।
नारदेन कचित्किञ्चिद्दृष्टमाह यथाक्रमम् ॥ ३३

भगवतः श्रीकृष्णस्याह्निककर्मकथनम् ॥ १
जरासन्धसंनिरुद्धैः राजभिः स्वमोचनार्थं श्रीकृ०

प्रति दूतप्रेषणम् ॥ २ ॥ तदानीं तत्रागतेन नारदेन युधिष्ठिरस्य राजसूयकरणार्थं प्रयत्नकथनम् ॥ ३ ॥

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

अथैकसप्ततितमे उद्धवस्य तु मन्त्रतः ।
इन्द्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः ॥ ३४ ॥
राजसूयमिषं कृत्वा भीमदुर्योधनादिषु ।
कलिमुत्पाद्य तद्द्वारा भूभारमहरत्प्रभुः ॥ ३५ ॥

शीघ्रं जरासन्धं हत्वा राज्ञो मोचयिष्यामि इत्युक्त्वा दूतं संप्रेष्य पाण्डवान्द्रष्टुं श्रीकृष्णस्य इन्द्रप्रस्थगमनम् ॥ १ ॥ कांश्चन मासांस्तत्र वसता खाण्डववनदाहः युधिष्ठिरस्य सभानिर्माणं च ॥ २ ॥

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते ।
दुर्जयं मागधं बुद्ध्वा भीमेनाघातयद्धरिः ॥ ३६ ॥

अर्जुनादीन् दिग्विजये नियुज्य इतरासाध्यस्य जरासन्धस्य वधार्थं भीमार्जुनाभ्यां सह श्रीकृष्णस्य गमनम् ॥ १ ॥ भीमेन जरासन्धवधः ॥ २ ॥

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

ततस्त्रिसप्ततितमे मोचयित्वा नृपान्हरिः ।
राजार्हभोगैः स्वान्देशान्प्रस्थाप्य पुनरागमत् ॥३७॥
अत्युत्कृष्टजरासन्धवधात्तद्धृद्धभूपतीन् ।
विमोक्ष्य कृपया कृष्णो निजरूपमदर्शयत् ॥ ३८ ॥

जरासन्धनिरुद्धानां राज्ञां श्रीकृष्णेन मोचनम् ॥ १ ॥ तैः श्रीकृष्णस्तुतिः ॥ २ ॥

## चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

चतुर्युक्सप्ततितमे राजसूयक्रिया द्विजैः ।
अग्र्यपूजाप्रसंगेन चैद्यघातादि वर्ण्यते ॥ ३९ ॥
राजसूयमुखे हत्वा जरासन्धं तदन्तरे ।
चैद्यं तदन्तं कुर्वन्तं बीजं कलिमिवावपत् ॥ ४० ॥

युधिष्ठिरस्य राजसूययागः ॥ १ ॥ श्रीकृष्णस्याग्र्यपूजायां सदस्यैः सर्वैरनुमतायां शिशुपालेन श्रीकृष्णनिन्दनम् ॥ २ ॥ श्रीकृष्णेन शिशुपालवधः ॥ ३ ॥

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

पञ्चयुक्सप्ततितमे यज्ञावभृथसंभ्रमः ।
सुयोधनस्य चाक्षान्त्या मानभङ्गो दृशि भ्रमात् ॥४१॥

यज्ञावभृथस्नानं समाप्य राज्ञां बन्धुभिः सह स्वावासगमनम् ॥ १ ॥ युधिष्ठिरेण श्रीकृष्णस्य दुर्योधनादीनां च सत्कारैः स्थापनम् ॥ २ ॥ तत्र वसतो कदाचित्सभादर्शनार्थं गतस्य स्थलभ्रान्त्या जले पतितस्य दुर्योधनस्य मानभङ्गः ॥ ३ ॥

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

ततः षट्सप्ततितमे वृष्णिसाल्वमहामृधे ।
द्युमद्गदाप्रहारेण रणात्प्रद्युम्ननिर्गमः ॥ ४२ ॥
सम्पाद्य धर्मराजस्य राजसूयमहोदयम् ।
निहत्य सौभराजादीनथोपागमदच्युतः ॥ ४३ ॥

श्रीकृष्णस्य इन्द्रप्रस्थवाससमये साल्वेन द्वारवतीमेत्य नगरद्वारनिरोधः ॥ १ ॥ वृष्णीनां साल्वस्य च युद्धे प्रद्युम्नपराजयः ॥ २ ॥

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

सप्तयुक्सप्ततितमे नानामायाविचक्षणः ।
कृष्णेनागत्य साल्वस्तु हतः सौभं च चूर्णितम् ॥४४॥

इन्द्रप्रस्थादागतेन श्रीकृष्णेन साल्ववधः ॥ १ ॥ कृष्णेन सह योद्धुं दन्तवक्रस्यागमनम् ॥ २ ॥

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

ततोऽष्टसप्ततितमे दन्तवक्त्रविदूरथौ ।
हत्वा हरिः पुरे रेमे रामः सूतं ततोऽवधीत् ॥ ४५ ॥

श्रीकृष्णेन दन्तवक्त्रविदूरथवधः ॥ १ ॥ [विजयध्वजीयपाठानुसारेण मध्ये महाभारतयुद्धकथा ॥ २ ॥] कौरवपाण्डवयुद्धं द्रष्टुमनस्कस्य रामस्य तीर्थयात्राव्याजेन गमनम् ॥ ३ ॥ अप्रत्युत्थायिनो रोमहर्षणाख्यस्य पौराणिकस्य सूतस्य रामेण वधः ॥ ४ ॥

## ऊनाशीतितमोऽध्यायः ॥ ७९ ॥

ऊनाशीतितमे रामो बल्वलं द्विजतुष्टये ।
निहत्य तीर्थस्नानाद्यैः सूतहत्यामपानुदत् ॥ ४६ ॥

रामेण इल्वलपुत्रस्य बल्वलस्य वधः ॥ १ ॥ तीर्थयात्रातः प्रत्यागमनसमये द्वन्द्वं युध्यतोर्भीमदुर्योधनयो रामेण निवारणम् ॥ २ ॥ तद्वाक्यमश्रृण्वन्तौ तौ ज्ञात्वा रामस्य द्वारकागमनम् ॥ ३ ॥

## अशीतितमोऽध्यायः ॥ ८० ॥

अथाशीतितमे कृष्णः श्रीदामानं गृहागतम् ।
संपूज्यापृच्छदर्थेप्सुं गुरुवासकथां मुदा ॥ ४७ ॥
सुरारिमारको हरिः पुरा चकार शं सताम् ।
अतः परं विनैव तन्निजोपकारमाचरत् ॥ ४८ ॥

[दुर्योधनवधानन्तरं युधिष्ठिरं राज्येऽभिषिच्य श्रीकृष्णस्य स्वपुरगमनम् ॥ १ ॥] कुचेलोपाख्यानम् ॥ २ ॥

## एकाशीतितमोऽध्यायः ॥ ८१ ॥

एकाशीतितमे सख्युर्जग्ध्वा पृथुकतण्डुलान् ।
श्रियं निर्मितवानिन्द्रदुर्लभां तु तदाश्रमे ॥ ४९ ॥

श्रीकृष्णप्रसादात्कुचेलस्य महैश्वर्यप्राप्तिः ॥ १ ॥

## द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

द्व्यशीतितम आगत्य कुरुक्षेत्रे रविग्रहे ।
वृष्णीन्दृष्ट्वा मुदा भूपाश्चक्रुः कृष्णकथा मिथः ॥५

सूर्योपरागकाले कुरुक्षेत्रे सर्वासां प्रजानां वृष्णी नां च गमनम् ॥ १ ॥ तत्र कुन्तीवसुदेवयोः संवा ॥ २ ॥ नन्दयशोदाभ्यां श्रीकृष्णरामादीनामालि नम् ॥ ३ ॥ श्रीकृष्णेन गोपीनां अध्यात्मज्ञानोप शेन सान्त्वनम् ॥ ४ ॥

## त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

त्र्यशीतितम एवं च स्त्रीणां कृष्णकथोत्सवे ।
द्रौपद्यै कृष्णभार्याभिरुक्ताः स्वस्वकरग्रहाः ॥ ५१

तत्र समेतानां स्त्रीणां परस्परं श्रीकृष्णकथाव नम् ॥ १ ॥ द्रौपदीपृष्टाभिः श्रीकृष्णमहिषी स्वस्वविवाहकथाकथनम् ॥ २ ॥

## चतुरशीतितमोऽध्यायः ॥ ८४ ॥

चतुर्भिरधिकाशीतितमे मुनिसमागमे ।
वसुदेवमखोत्साहबन्धुप्रस्थापनादिकम् ॥ ५२ ॥

श्रीकृष्णरामदिदृक्षया बहूनां ऋषीणां तत्र गमनम् ॥ १ ॥ भगवता ब्राह्मणमहिमकथन ॥ २ ॥ ऋषिभिर्भगवत्स्तुतिः ॥ ३ ॥ केन कर्म कर्मबन्धक्षयो भवेत्? इति वसुदेवेन पृष्टैः ऋषिभि सर्वयज्ञेश्वरस्य भगवतो यज्ञेनाराधनमेव श्रेयोधि मित्युक्ते वसुदेवेन तत्रैवोत्तमकल्पेन यजनम् ॥ ४ बन्धुप्रस्थापनादिकम् ॥ ५ ॥

## पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

पञ्चाशीतितमे रामकृष्णौ संप्रार्थितौ सुतौ ।
पित्रे ज्ञानमथो मात्रे मृतान्पुत्रानयच्छताम् ॥ ५३

वसुदेवकृता श्रीकृष्णरामस्तुतिः ॥ १ ॥ देवकीप्रार्थिताभ्यां श्रीकृष्णरामाभ्यां पूर्वमृतानां स्वाग्रजानामानयनाय रसातलगमनम् । महाबलिना तावर्हयित्वा आगमनकारणप्रश्नः ॥ २ ॥

## षडशीतितमोऽध्यायः ॥ ८६ ॥

षडशीतितमे दम्भात्सुभद्रामर्जुनोऽहरत् ।
गत्वा च मिथिलां कृष्णो नृपविप्रावनन्दयत् ॥ ५४ ॥

रामकृष्णयोः स्वसारं सुभद्रामर्जुनः कथं जहार इति परीक्षिता पृष्टेन शुकाचार्येण अतीतायास्तत्कथायाः कथनम् ॥ १ ॥ श्रीकृष्णेनैकदैव बहुलाश्वश्रुतदेवयोर्गृहं गत्वाऽनुग्रहः ॥ २ ॥

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

सप्ताशीतितमे नारायणनारदवाक्यतः ।
वेदैः स्तुतिर्गुणालम्वा निर्गुणावधि वर्ण्यते ॥ ५५

श्रुतिर्गीता ॥ १ ॥

## अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

अष्टाशीतितमे विष्णुभक्तः कैवल्यमश्नुते ।
ततोऽर्वाग्देवभक्तस्तु विभूतिमिति वर्ण्यते ॥ ५६ ॥

विष्णुभक्तएव अनल्पस्थिरशाश्वतसुखरूपं मोक्षमाप्नोति । इतरदेवताभक्तस्तु अल्पास्थिराशाश्वतं दुःखमिश्रं मोक्षेतरफलमेव । इत्यत्र वृकासुरोपाख्यानम् ॥ १ ॥

## एकोननवतितमोऽध्यायः ८९ ॥

नवाशीतितमे देवः को महानिति संशये ।
परीक्ष्य विष्णोरुत्कर्षं मुनिभ्योऽवर्णयद्भृगुः ॥ ५७ ॥

देवेषु क उत्तम इति संशये भृग्वादिभिः परीक्ष्य विष्णुरेव सर्वोत्तम इति ख्यापनम् ॥ १ ॥

## नवतितमोऽध्यायः ॥ ९० ॥

शिखरे तु ततःप्रोक्ता कृष्णलीला समासतः ।
यदुवंशप्रसूतानामानन्त्यं च सकारणम् ॥ ५८ ॥

स्कन्धान्ते श्रीकृष्णलीलासङ्ग्रहः ॥ १ ॥

अस्मिन् स्कन्धे विजयध्वजीयपाठे अध्यायः ॥१०३॥

इति दशमः स्कन्धः ॥ १० ॥

श्रीगोपालकृष्णाय नमः ।

# एकादशः स्कन्धः ॥ ११ ॥

उक्तैकत्रिंशताऽध्यायैर्मुक्तिरेकादशे ततः । जायन्तेयेतिहासाद्यैः समासव्यासरूपतः ॥ १
नारदो वसुदेवाय समासेन न्यवर्णयत् । भगवानुद्धवायाथ विस्तरेणोपपत्तिभिः ॥ २ ॥

## प्रथमोऽध्यायः ॥ १ ॥

अत्र तु प्रथमेऽध्याये यदुवंशस्य संक्षयः ।
उपक्षिप्तो विरागाय मौसलव्यपदेशतः ॥ ३
प्रवृत्तितः परानन्दकृष्णक्रीडाऽनुवर्णिता ।
तन्निवृत्त्या परानन्दपदारोहोऽनुवर्ण्यते ॥ ४

शुकाचार्येण राज्ञे यदुकुलसंक्षयं वक्तुं ऋषिदत्त-

यदुकुमारशापदानकथनम् ॥ १ ॥ कदाचिद्यदुकुमारैः साम्बं स्त्रीवेषेणालंकृत्य इयमन्तर्वत्नी कुमारं प्रसोष्यत्युत कुमारीमिति पिण्डारकक्षेत्रवासिन ऋषीन्प्रति प्रश्नः ॥ २ ॥ इति च्छलिता महर्षयः इयं युष्मत्कुलनाशकमायसं मुसलं प्रसोष्यतीति शेपुः ॥ ३ ॥ यथाशप्तमुत्पन्नमायसं मुसलमुग्रसेनः चूर्णयित्वा समुद्रे प्रास्यत् ॥ ४ ॥ ते आयसकणाः समुद्रतीरे एरका अभवन ॥ ५ ॥ यादवाः परस्परं ताभिरेरकाभिः प्रहृत्य मम्रुः इति ॥ ६ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वितीये निमिजायन्तसंवादेनाह नारदः ।
धर्मान्भागवतान्भक्त्या वसुदेवाय पृच्छते ॥ ५ ॥

श्रीकृष्णसेवार्थमभीक्ष्णं द्वारकायां निवसन्तं नारदं प्रति वसुदेवेन भागवतधर्मप्रश्नः ॥ १ ॥ नारदेन वसुदेवाय निमिजायन्तेयसंवादरूपभागवतधर्मकथनम् ॥ २ ॥ जायन्तेयेषु कविहरिभ्यां निमिराजाय धर्मोपदेशः ॥ ३ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

माया-तत्तरण-ब्रह्म-कर्म-प्रश्नचतुष्टये ।
तृतीये तूत्तरं दत्तमार्षभैर्मुनिभिः पृथक् ॥ ६ ॥

निमिराजेन अन्तरिक्ष - प्रबुद्ध - पिप्पलायन- आविर्होत्रान्प्रति कृतानां माया - तत्तरणोपाय - ब्रह्मस्वरूप - कर्मस्वरूप - विषयकाणां चतुर्णां प्रश्नानां तैः पृथक् पृथक् उत्तरदानम् ॥ १ ॥ तान्त्रिकभगवत्पूजाप्रकारकथनम् ॥ २ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थे त्ववतारेहाप्रश्नस्योत्तरमुक्तवान् ।
जयन्तीनन्दनो नाम्ना द्रुमिलो नवसत्तमः ॥ ७ ॥

जायन्तेयेन द्रुमिलेन निमिराजं प्रति भगवदवतारवर्णनम् ॥ १ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे भक्तिहीनानां का निष्ठा को युगे युगे ।
पूजाविधिरिति प्रश्नद्वयस्योत्तरमुच्यते ॥ ८ ॥

जायन्तेयेन चमसेन निमिं प्रति भगवद्भक्तिहीनानां निष्ठाकथनम् ॥ १ ॥ करभाजनेन प्रति युगं भगवत्पूजाविधिकथनम् ॥ २ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठे ब्रह्मादिभिः स्तुत्वा गन्तुं विज्ञापितं हरिम् ।
उद्धवः प्रार्थयामास स्वधाम नय मामिति ॥ ९ ॥

ब्रह्मादिदेवैः श्रीकृष्णस्य स्वलोकगमनाय प्रार्थनम् ॥ १ ॥ भगवता यादवानां प्रभासगमनाय आज्ञापनम् ॥ १ ॥ भगवतो भूलोकत्यागेच्छां ज्ञात्वा उद्धवेन स्वस्यापि परलोकनयनप्रार्थना ॥ ३

## सप्तमोऽध्यायः ॥ ७ ॥

सप्तमे तूद्धवस्यात्मज्ञानसिध्द्यै हरिः स्वयम् ।
अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥ १० ॥

भगवता उद्धवंप्रति ज्ञानोपदेशार्थमवधूतेतिहासकथनारंभः ॥ १ ॥ अवधूतेन यदुं प्रति स्वस्य चतुर्विंशतिगुरूणां मध्ये अष्टभ्यः शिक्षितबुद्धिकथनम् ॥ २ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमेऽजगरादिभ्यो नवभ्यः शिक्षितं हरिः ।
अवधूतगिरा प्राह विवेकायोद्धवं प्रति ॥ ११ ॥

अवधूतस्य अजगरादिभ्यो नवभ्यो गुरुभ्यः शिक्षितबुद्धिकथनम् ॥ १ ॥

## नवमोऽध्यायः ॥ ९ ॥

नवमे कुररादिभ्यो देहतश्चोपशिक्षितम् ।
श्रुत्वा यदुः कृतार्थोऽभूदिति कृष्णेन वर्णितम् ॥१२॥

अवधूतस्य कुररादिसप्तगुरुभ्यः प्राप्तबुद्धिकथनम् ॥ १ ॥ अवधूतेतिहाससमाप्तिः ॥ २ ॥

## दशमोऽध्यायः ॥ १० ॥

चतुर्विंशतिगुर्वाख्यालब्धसंभावनाभुवः ।
उद्धवस्यात्मतत्त्वाप्त्यै साधनोक्तिरतःपरैः ॥ १३ ॥
दशमे देहसंबन्धात्संसृतिर्नात्मनः स्वतः ।
इत्येतद्वर्णयामास मतान्तरनिरासतः ॥ १४ ॥

श्रीकृष्णेनोद्धवं प्रति जीवस्य संसारप्राप्तिकारणकथनम् ॥ १ ॥

## एकादशोऽध्यायः ॥ ११ ॥

एकादशे तु बद्धानां मुक्तानां चाथ लक्षणम् ।
साधूनां च तथा भक्तेर्लक्षणं हरिणेरितम् ॥ १५ ॥

कृष्णेनोद्धवं प्रति बद्धमुक्तलक्षणकथनम् ॥ १ ॥
साधूनां भक्तेश्च लक्षणम् ॥ २ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

द्वादशे साधुसङ्गस्य महिमा वर्णितः पुरा ।
कर्मानुष्ठानतत्त्यागव्यवस्था च ततःपरम् ॥ १६ ॥

कृष्णेनोद्धवं प्रति सत्सङ्गमहिमकथनम् ॥ १ ॥
कर्मानुष्ठानतत्त्यागयोश्च व्यवस्थाकथनम् ॥ २ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

त्रयोदशेऽथ सत्त्वस्य वृद्ध्या विद्योदयक्रमः ।
हंसेतिहासतश्चित्तगुणविश्लेषवर्णनम् ॥ १७ ॥

सत्ववृद्ध्या विद्योदयः ॥ १ ॥ हंसेतिहासः ॥२॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

चतुर्दशे परं श्रेयो भक्तिरेव नचेतरत् ।
इत्येतद्वर्ण्यते ध्यानयोगश्च सह साधनैः ॥ १८

भगवद्भक्तेः परमश्रेयस्साधनत्वकथनम् ॥ १ ॥
ध्यानयोगनिरूपणम् ॥ २ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

ततः पञ्चदशे प्रोक्ताः सिद्धयो धारणायुताः ।
श्रीविष्णुपदसम्प्राप्त्यन्तरायतया मताः ॥ १९ ॥

अणिमाद्यष्टादशसिद्धिवर्णनम् ॥ १ ॥

## षड्विंशोऽध्यायः ॥ १६ ॥

षोडशे तु हरेराविर्भावयुक्ता विभूतयः ।
ज्ञानवीर्यप्रभावादिविशेषणोपवर्णिताः ॥ २० ॥
अन्तश्चित्तेन यद्ध्यानमशक्यमकृतात्मनाम् ।
अतस्तद्योग्यताप्त्यै विभूत्यादिनिरूपणम् ॥ २१ ॥

हरेर्विभूतिरूपवर्णनम् ॥ १ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

ततः सप्तदशे पृष्टे स्वधर्मे भक्तिलक्षणे ।
हंसोक्तं धर्ममन्वाह ब्रह्मचारिगृहस्थयोः ॥ २२ ॥

उद्धवाय श्रीकृष्णेन ब्रह्मचारिगृहस्थधर्मवर्णनम् ॥ १ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

अष्टादशेऽवदद्धर्मं वनस्थयतिगोचरम् ।
अधिकारिविशेषेण विशेषं चापि तद्गतम् ॥ २३ ॥

वानप्रस्थसंन्यासिनोर्धर्मकथनम् ॥ १ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

ज्ञानादेर्निर्णयः पूर्वं कृतो ह्याश्रमधर्मतः ।
अत्रोनविंशतितमे ज्ञानादेस्त्याग उच्यते ॥ २४ ॥

ज्ञानादीनां यमादीनां च स्वरूपकथनम् ॥ १ ॥

## विंशोऽध्यायः ॥ २० ॥

विंशे योगत्रयं प्रोक्तं भक्तिज्ञानक्रियात्मकम् ।
गुणदोषव्यवस्थार्थमधिकारिविभागतः ॥ २५ ॥

भक्तिज्ञानक्रियात्मकयोगकथनम् ॥ १ ॥

## एकत्रिंशोऽध्यायः ॥ २१ ॥

एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् ।
कामिनां द्रव्यदेशादिगुणदोषाः प्रकीर्तिताः ॥ २६ ॥

कामिनां द्रव्यदेशादिगुणदोषवर्णनम् ॥ १ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

द्वाविंशे तत्त्वसंख्यानामविरोधविधिरुच्यते ।
पुंप्रकृत्योर्विवेकश्च जन्ममृत्युविधादि च ॥ २७ ॥

तत्त्वसंख्यानप्रभेदानामविरोधकथनम् ॥ १ ॥ प्रकृतिपुरुषविवेकः ॥ २ ॥ जन्ममृत्युप्रकारकथनम् ॥ ३ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

त्रयोविंशे तिरस्कारसहनोपाय ईर्यते ।
भिक्षुगीताप्रकारेण मनसः संयमो धिया ॥ २८ ॥
दुर्जनोपद्रवो नूनं दुःसहो हि महीयसाम् ।
अतश्चतुर्भिरध्यायैः सहनोपायवर्णनम् ॥ २९ ॥

मनसः दुःखादिसहनोपायकथनार्थं भिक्षुगीताकथनम् ॥ १ ॥ अवन्त्यामाढ्यः कश्चिद्द्विज आसीत् ॥ २ ॥ तेन स्वेषां परेषां वा उपकृतिः कदापि न कृता ॥ ३ ॥ तेन कष्टार्जितं सर्वमपि द्रव्यं राजचोरादिभिरपहृतम् ॥ ४ ॥ तदा तस्य भार्यापुत्रस्वजनाः तं नाद्रियन्त ॥ ५ ॥ ततो निर्वेदमापन्नः स द्विजो भिक्षुरभवत् ॥ ६ ॥ पूर्वं तेनानर्चिता जनास्तमनेकाभिर्विधाभिरुपद्रवयांचक्रुः ॥ ७ ॥ दुर्जनोपद्रवं सोढ्वा स्वयमात्मानं विगर्हयन् अध्यात्मविषयिणीं गाथामगायत ॥ ८ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते ।
आत्मनः सर्वभावानामागमापायचिन्तया ॥ ३० ॥

मनोमोहनिरासार्थं सांख्यकथनम् ॥ १ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

पञ्चविंशे स्वनैर्गुण्यप्रतिपत्त्यै निरूप्यते ।
चित्तप्रभवसत्त्वादिगुणवृत्तिरनेकधा ॥ ३१ ॥

कृष्णेनोद्धवाय सत्त्वादिगुणवृत्तिवर्णनम् ॥ १

## षड्विंशोऽध्यायः ॥ २६ ॥

षड्विंशे योगनिष्ठाया विघातो दुष्टसंगतः ।
साधुसंगेन तन्निष्ठापराकाष्ठेति वर्ण्यते ॥ ३२ ॥
योगिनो योगविभ्रंशः संगतः संभवेदिति ।
सर्वथा तन्निवृत्त्यर्थमैलगीतं निरूप्यते ॥ ३३ ॥

दुष्टसङ्गेन योगविघातः सत्सङ्गेन योगप्राप्तिरित्यत्र ऐलगीताकथनम् ॥ १ ॥ बहुकालमुर्वश्या रममाणस्य मध्ये तया रहितस्य पुरूरवसः स्वयमात्मनाऽऽत्मानं विनिन्द्य स्त्रीसङ्गः सर्वथा न कर्तव्य इति गाथागानम् ॥ २ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

सप्तविंशे क्रियायोगः सद्यश्चित्तप्रसादकः ।
सर्वकामाप्तिहेतुश्च साङ्गः प्रोक्तः समासतः ॥ ३४
रागाद्याकुलचित्तानां कुतोऽसंगादिसंभवः ।
इति कृष्णार्चनं भद्रमनुस्मृत्यानुपृच्छति ॥ ३५ ॥

श्रीकृष्णेनोद्धवाय क्रियायोगे अर्चाप्रभेदर पूजाविधानस्य च कथनम् ॥ १ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ।
ज्ञानयोगः पुनश्चास्मो समाहृत्य निरूप्यते ॥ ३६ ॥

पूर्वोक्तस्य ज्ञानयोगस्यात्र संक्षेपतः पुनर्निरूपणम् ॥ १ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

ऊनत्रिंशे तु यः पूर्वं विस्तरेण निरूपितः ।
भक्तियोगस्तमेवाह स्वभक्ताय समासतः ॥ ३७ ॥

अनिक्लेशमिवालक्ष्य योगेऽसंगैकसंपदि ।
सुखोपायं पुनः कृष्णमुद्धवः परिपृच्छति ॥ ३८ ॥

श्रीकृष्णेनोद्धवं प्रति पूर्वोक्तस्य भक्तियोगस्य पुनरत्र संक्षेपतो निरूपणम् ॥ १ ॥ श्रीकृष्णोपदेशेन प्राप्तविज्ञानस्य उद्धवस्य तं स्तुत्वा तदाज्ञया बदरिकाश्रमप्रवेशः ॥ २ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

त्रिंशे तु प्रागुपक्षिप्तमौसलच्छलतो हरिः ।
स्वधाम गन्तुमन्विच्छन्संजहार निजं कुलम् ॥३९॥
विरागाय पुरा योऽमुपक्षिप्तं हि मौसलम् ।
कथावसाने तत्रैव विशेषं परिपृच्छति ॥ ४० ॥

शुकाचार्येण परीक्षितं प्रति भगवता कृतस्य मौसलव्याजेन यादवकुलसंहारस्य कथनम् ॥ १ ॥ बलरामस्य देहत्यागः ॥ २ ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

एकत्रिंशे स्वकं धाम जगाम भगवानितः ।
तमेवानुययुः प्रीत्या वसुदेवादयस्ततः ॥ ४१ ॥
देवान्यदून्विधायादौ भुवो देवान्विधाय च ।
श्रीकृष्णः स्वेच्छया धाम स्वतन्त्वैव समाविशत् ४२

शुकाचार्येण परीक्षितं प्रति भगवतः स्वलोकगमनस्य ततो वसुदेवादीनां स्वस्वमूलरूपप्राप्तेश्च कथनम् ॥ १ ॥

इत्येकादशः स्कन्धः ॥ ११ ॥

श्रीगोपालकृष्णाय नमः ।

# द्वादशः स्कन्धः ॥ १२ ॥

उक्तस्त्रयोदशाध्यायैर्द्वादशे त्वाश्रयः सतः । अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः ॥ १ ॥
उक्तो लयावधित्वेन प्राकृतात्यन्तिके लये । अधिष्ठानतया चोक्तो महापुरुषवर्णने ॥ २ ॥
तत्रादौ षड्भिरध्यायैः शुकः प्राह परीक्षिते । शेषस्तत्राखिलान्याह सूतः पृष्टोऽथ सत्रिभिः ॥ ३ ॥
स्वाश्रयश्रवणे कार्यो न विलम्बो मनीषिणा । इत्येतत्कालवैषम्यं चतुर्भिस्तावदुच्यते ॥ ४ ॥

## प्रथमोऽध्यायः ॥ १ ॥

तत्र तु प्रथमे भाविमागधान्वयभूमिपान् ।
कलिप्रभावतः प्राह सङ्करादिमलीमसान् ॥ ५ ॥

मागधवंशे कलौ भविष्यतां राज्ञां कथनम् ॥ १ ॥ तेषामयोग्यताकथनम् ॥ २ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः
अधर्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥ ६

कलियुगदोषकथनम् ॥ १ ॥ कलेरन्ते कल्क्यवतारः ॥ २ ॥ ततः कृतयुगारंभः ॥ ३ ॥

## तृतीयोऽध्यायः

तृतीये भूमिर्गातैश्च राज्यदोषादि वर्ण्यते ।
कलौ च दोषभूयिष्ठे दोषहन्त्री हरेर्नतिः ॥ ७ ॥

भूम्या राज्यस्पृधां राज्ञामुपहासः॥ १ ॥ कलिदोषनिरासकश्रीहरिगुणप्रशंसा ॥ २ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः ।
तत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥ ८ ॥

नैमित्तिकादिचतुर्विधलयकथनम् ॥ १ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पञ्चमे तु समासेन परब्रह्मोपदेशतः ।
राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥ ९ ॥

शुकाचार्येण परीक्षिते ब्रह्मोपदेशेन तक्षकदंशभीतिनिवारणम् ॥ १ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

षष्ठे परीक्षितो मोक्षः सर्पहोमादि तत्सुतात् ।
वेदशाखाविभागोक्तौ त्रिवेदिव्यासवर्णनम् ॥ १० ॥

राज्ञाऽनुज्ञातस्य शुकाचार्यस्य गमनानुपदं तक्षकेण राज्ञो दंशनम् ॥ १ ॥ परीक्षित्पुत्रेण जनमेजयेन सर्पसत्रकरणम् ॥ २ ॥ कृष्णद्वैपायनेन वेदविभागकरणम् ॥ ३ ॥ याज्ञवल्क्यस्य सूर्याद्वाजसनेयशाखाध्ययनम् ॥ ४ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

सप्तमेऽथर्वविस्तारः पुराणव्यसनं ततः ।
पुराणलक्षणादीनि फलं भागवतश्रुतेः ॥ ११ ॥

अथर्ववेदविभागः ॥ १ ॥ पुराणलक्षणदशककथनम् ॥ २ ॥ अष्टादशपुराणनामकथनम् ॥ ३ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

अष्टमे तु तपश्चर्या मार्कण्डेयस्य मोहकैः ।
कामादिभिरसन्मोहो नरनारायणस्तुतिः ॥ १२ ॥

मार्कण्डेयस्य तपश्चर्या ॥ १ ॥ तत्कृता नरनारायणस्तुतिः ॥ २ ॥

## नवमोऽध्यायः ॥ ९ ॥

नवमे भगवन्मायादिदृक्षोर्दर्शने मुहुः ।
मायाशिशोर्लयाब्धौ च मुनेर्निर्वेशनिर्गमैः ॥ १३ ।

भगवता मार्कण्डेयाय प्रलयप्रदर्शनम् ॥ १ वटपत्रशायिनो बालमुकुन्दस्य मार्कण्डेयेन दर्शनम् ॥ २ ॥

## दशमोऽध्यायः ॥ १० ॥

दशमे शिव आगत्य मुनेस्तुष्टो वरानदात् ।
तेन साकमतिप्रीत्या समाभाष्य सभाजयन् ॥ १४

मार्कण्डेयस्य शिवेनापि वरदानम् ॥ १ ॥

## एकादशोऽध्यायः ॥ ११ ॥

एकादशे तु पूजार्थं महापुरुषवर्णनम् ।
रवेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक्पृथक् ॥ १५
येनामर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवोत्तमः ।
तं पृच्छति क्रियायोगं साङ्गोपाङ्गादिकल्पितम्॥१

पूजार्थं महापुरुषवर्णनम् ॥ १ ॥ सूर्यव्यूहवर्णनम् ॥ २

## द्वादशोऽध्यायः ॥ १२ ॥

द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः ।
प्रथमस्कन्धमारभ्य प्राधान्येन समासतः ॥ १७ ॥

भागवतोक्तसर्वार्थानुक्रमः ॥ १ ॥ भागवतश्रवणफलम् ॥ २ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

त्रयोदशे पुराणानां संख्यामाह यथाक्रमम् ।
दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥ १८

अष्टादशपुराणानां ग्रन्थसङ्ख्या ॥ १ ॥

इति द्वादशः स्कन्धः ॥ १२ ॥

श्रीमद्भागवतविषयानुक्रमणिका संपूर्णा ॥

श्रीलक्ष्मीनारायणाभ्यां नमः ॥ श्रीगोपालकृष्णाय नमः । श्रीवेदव्यासाय नमः । श्रीसरस्वत्यै नमः ।

# श्रीभागवतस्थानां प्रसिद्धनाम्नां विषयाणां च वर्णानुक्रमणी ।

**अंशुमान्** । क्ष० । सू० वं० । असमञ्जस्य पुत्रः न० ८ । १५ ॥ तत्पुत्रो दिलीपः । न० ९ । २

**अकृतव्रणः** । ऋ० । परशुरामस्य शिष्यः । पौराणिकः । द्वा० ७ । ५ ।

**अक्रियः** । क्ष० । सो० वं० । गम्भीरस्य पुत्रः । तस्य वंशे ब्राह्मणानामुत्पत्तिः । न० १७ । १० ।

**अक्रूरः** । क्ष० । सो० वं । श्वफल्कस्य पुत्रः । न० २४ । १५ ॥ [भार्या आहुकपुत्री सुतनुः । म० भा० स० १४ ॥] पुत्रौ देववान् उपदेवश्च । न० २४ । १७ । कृष्णाह्वानार्थं गोकुलगमनम् । द० ३८ ॥ कालिन्द्यां स्नानकाले रामकृष्णयोर्दर्शनम् । द० ३९ । ४१ ॥ श्रीकृष्णस्तुतिः । द० ३८ । ७–२२ ॥ ४० । १–३० ॥ ४८ । १८–२७ ॥ कृष्णस्य तद्गृहगमनम् । द० ४८ । १२–३६ ॥ हास्तिनपुरगमनम् । द० ४९ ॥ द्वारकापुरीतोऽन्यत्र गमनम् । द० ५७ । ३० ॥

**अक्षद्यूतम्** । रुक्मिबलरामयोः । द० ६१ । २७ ॥

१ **अगस्त्यः** । ऋ० । पुलस्त्यस्य पुत्रः । माता हविर्भुक् । भ्राता विश्रवाः । अयं स्वायंभुवमन्वन्तरीयः । च० १ । ३६ । इन्द्रद्युम्नाय शापदानम् । अ० ४ । १० ॥ महादेवशापात् तन्नाशः ।

२ **अगस्त्यः** । पूर्वोक्तस्य तस्य पुनः एतस्मिन् मन्वन्तरे उर्वशीदर्शनक्षुभितात् कुम्भे धृतात् मित्रावरुणतेजस उत्पत्तिः । तदानीं तस्य सहजो वसिष्ठः । अत एवास्य कुम्भयोनिः मैत्रावरुणिः इति च प्रसिद्धिः । ष० १८ । ५ । भार्या लोपामुद्रा । पुत्र इध्मवाहः ॥

१ **अग्निः** । प्रधानाग्निः । ब्रह्मणो मानसः पुत्रः भार्या स्वायंभुवदक्षपुत्री स्वाहा । पुत्राः पावकः पवमानः शुचिश्च । पौत्राः पञ्चचत्वारिंशत् । च० १ । ६० ॥

२ **अग्निः** । पूर्वोक्त एव चाक्षुषे मन्वन्तरे द्वितीयवारमुत्पन्नः । पिता धर्मप्रजापतिः । माता प्राचेतसदक्षपुत्री वसोर्धारा । अयमष्टवसुष्वन्यतमः । पुत्राः द्रविणकादयः स्कन्दश्च । ष० ६ । १३ ।

**अग्नितत्त्वम्** । तेजस्तत्त्वशब्दं पश्यत ॥

**अग्निमिता** । पैलस्य शिष्यः । **द्वा० ६** । ५४–५५ ॥

**अग्निमित्रः** । क्ष० मौर्यस्य बृहद्रथस्य पुत्रः । **द्वा० १** । १६ ॥

**अग्निवर्णः** । क्ष० सू० वं० । **न० १२** । ५ ॥

**अग्निवेश्यः** । क्ष० । तपसा ब्राह्मणो जातः । कानीनः जातूकर्ण्य इति च नामनी । **न० २** । २१ ॥

**अग्निष्टुत्** । यागविशेषः । **तृ० १२** । ४० ।

**अग्निष्टोमः** । देवः । पिता चक्षुर्नामा मनुः । माता नड्वला । **च० १३** । १६ ॥

**अग्निहोत्रम्** । देवः । पिता सविता । माता पृश्निः । **प० १८** । १ ॥

**अग्निष्वात्ताः** । पितरः । पत्नी स्वायंभुवदक्षपुत्री स्वधा । कन्ये वयुना धारिणी च । **च० १** । ६३ ॥

**अग्र्यपूजा** । श्रीकृष्णस्य । **द० ७४** । २६ ॥

**अघः** । अजगररूपी असु० । कृष्णेन हतः । **द० १२** । १३–३१ ॥

**अघमर्षणम्** । तीर्थविशेषः । तत्र प्राचेतसदक्षेन तपश्चरणम । **प० ४** । २०-२१ ।

**१ अङ्गः** । क्ष० । उत्तानपादवंश्यः । पिता उल्मुकः । भार्या सुनीथा । पुत्रो वेनः । **च० १३** । १७ । अश्वमेधकरणम । २५ । निर्वेदेन राज्यत्यागः । ४७ ॥

**२अङ्गः** । क्ष० । सो० वं० । बलेर्भार्यायां दीर्घतमस उत्पन्नः । **न० २३** । ५ ।

**१अङ्गदः** । वालिपुत्रो वानरः । **न० १०** । १७ ॥

**२अङ्गदः** । क्ष० । दाशरथिलक्ष्मणस्य पुत्रः । **न० ११** । १२ ।

**अङ्गारकः** । ग्रहः । मण्डलम् । **पं० २२** । १४ ॥

**अङ्गिरसां सत्रम्** । **न० ४** । ३ ॥

**१अङ्गिराः** । ब्रह्मणो मुखाज्जातः प्रजापतिः । दशमानसपुत्रेष्वन्यतमः **तृ० १२** । २४ ॥ भार्या कर्दमपुत्री **२४** । २२ ॥ पुत्रौ उचथ्यो बृहस्पतिश्च । **च० १** । ३५ ॥ कन्याः सिनीवाली राका अनुमतिश्च । अयं महादेवशापान्मृतः । **च० ३०** । ४८ ॥

**२अङ्गिराः** । ऋ० । स एव पुनः वैवस्वतमन्वन्तरे वरुणस्य यज्ञे उत्पन्नः । भार्ये प्राचेतसदक्षकन्ये स्वधा २ सती च । स्वधापुत्राः पितरः । सतीपुत्रोऽथर्वाङ्गिराः । **प० ६** । १७ । चित्रकेतुराजाय वरप्रदानम् । **१४** । १४ ॥ ज्ञानोपदेशः । **१६** ॥

**३अङ्गिराः** । क्ष० । **च० १३** । १७ ॥

**१अजः** । क्ष० । प्रतिहर्तुः पुत्रः । **पं०** । **१५** । ५ ।

**२अजः** । एकादशरुद्रेष्वन्यतमः । पिता भूतप्रजापतिः माता सरूपा । **प० ६** । १७ ॥

**३ अजः** । क्ष० । सू० वं० । दशरथस्य पिता **न० १०** । १ ॥

**अजकः** । क्ष० । सो० वं० । पिता बलाकाश्वः पुत्रः २ कुशः । **न० १५** । ३–४ ॥

**अजनः** । **जिन** इति नामान्तरम । बुद्धस्य पिता **प्र० ३** । २४ ॥

**अजनाभम्** । भारतवर्षस्य प्राक्तनं नाम । **पं ७** । ३

**अजमीढः** । क्ष० । सो० वं० । पिता हस्ती । पुत्र बृहदिषुः नीलः शान्तिश्च । तद्वंशे प्रियधामाद ब्राह्मणा बभूवुः । **न० २१** । २१, ३० ॥

**अजयः** । क्ष० । **द्वा० १** । ६ ॥

**१ अजातशत्रुः** । युधिष्ठिरः । **प्र० १३** । ३० ॥

**२ अजातशत्रुः** । क्ष० । पुत्रो दर्भकः । **द्वा० १** । ६ ॥

**अजामिलः** । ब्राह्मणः । उपाख्यानम् । **प० १** । २१–२ ॥

**अजितः** । वैराजस्य पुत्रो भगवदवतारः । स एव पुनः कूर्मरूपेणाविर्भूतः । **अ० ५** । ९ ॥ अमृतमथनम् । **७** । १६ ॥

**अजैकपात्** । एकादशरुद्रेष्वन्यतमः । पिता भूतप्रजापतिः । माता सरूपा । **प० ६** । १७ ॥

**अज्ञानम्** । **पं० ५** । १२ ॥

**अट्मानः** । क्ष० । **द्वा० १** । २४ ॥

**अणिमा** । सिद्धिः । **ए० १५** । १० ॥

**अण्डम्** । ब्रह्माण्डशब्दं पश्यत ॥

**अण्डकोशः** । ब्रह्माण्डशब्दं पश्यत ॥

**अण्डराशयः** । ब्रह्माण्डशब्दं पश्यत ॥

**अतलम्** । अधोलोकेषु प्रथमः । **पं० २४** । ७ । वर्णनम् । १६ ॥ **द्वि० १** । २७ ॥ **५** । ४० ॥

**अतिकायः** । राक्ष० । **न० १०** । १८ ॥

**अतिथिः** । क्ष० । सू० वं० । पिता रामपुत्रः कुशः । **न० १२** । १ ॥

**अतिभानुः** । क्ष० । सो० वं० । पिता कृष्णः । माता सत्यभामा । **द० ६१** । १० ॥

**१ अतिरात्रः** । यागः । ब्रह्मणो वक्त्रादुत्पन्नः । **तृ० १२** । ४० ॥

**२ अतिरात्रः** । क्ष० । पिता चक्षुर्नामा मनुः । माता नड्वला । **च० १३** । १६ ॥

**अतीरात्रः** । २ अतिरात्रशब्दं पश्यत ॥

**अत्रिः** । ऋ० । ब्रह्मणो नेत्राज्जातः । **तृ० १२** । २४ ॥ भार्या अनसूया । पुत्राः दत्तः दुर्वासाः सोमश्च । **च० १** । १५ । ३३ ॥ **न० १४** । २ ॥ अस्यापि दक्षस्येव द्विवारमुत्पत्तिः ॥

**अथर्वः** । वेदः । **प्र० ४** । २० ॥

**अथर्वा** । ऋ० । ब्रह्मणो मानसः पुत्रः । भार्या शान्ति (चित्तिः) । पुत्रो दध्यङ् । **च० १** । ४२ ॥

**अथर्वाङ्गिरसः** । ऋ० । २अङ्गिरसः पुत्रः । माता २ सती । **प० ६** १९ ॥

**अदितिः** । दक्षप्रजापतिपुत्री । कश्यपस्य भार्या । पुत्रा द्वादशादित्याः । **प० ६** । २५, ३८ ॥ तया पयोव्रतकरणम । **अ० १६–१७** ॥ तस्यां वामनावतारः । **१८** । १ ॥ कुण्डलदानं श्रीकृष्णेन । **द० पूर्व० ३६** ॥

**अद्भुतः** । दक्षसावर्णिमन्वन्तरीय इन्द्रः । **अ० १३** । १९ ॥

**अद्वैतप्रकरणम्** । **स० ९** । ३०–३१ ॥ **द० ३** । १८ ॥ **१४** । २२ ॥ **च० ७** । ५०–५४ । ९ । ३३ ॥

**अधर्मः** । देवः ब्रह्मणः पृष्ठादुत्पन्नः । तस्य मृत्युरित्यपि नाम । **तृ० १२** । २५ ॥ तद्भार्या मृषा । पुत्रौ दंभो माया च ; तौ दम्पती अभवताम् । **च० ८** । २ ॥

**अधर्मांशाः** । स्मयः सङ्गः मदश्च । **प्र० १७** । २४ ॥ तल्लक्षणम । **स० १५** । १२ ॥ तद्वंशः । **च० ८** । २ ॥

**अधिदैवम्** । **द्वि० १०** । १४ ॥

**अधिभूतम्** । **द्वि० १०** । १४ ॥

**अधिरथः** । क्ष० । सो० वं० । सूतत्वं प्राप्तः । पिता सत्कर्मा । पुत्रः कर्णः । **न० २३** । १२ ॥

**अधोलोकाः** । अतलं, वितलं, सुतलं, तलातलं, महातलं,

**अमृतरसकूपः** । त्रिपुरासुराणाम् । गोरूपिणा विष्णुना तत्पानम् । **स०** १० । ६२ ॥

**अमृतौघा** । क्रौञ्चद्वीपस्था नदी । **पं०** २० । २१ ॥

१ **अम्बरीषः** । क्ष० । सू० वं० नाभागस्य पुत्रः । **न०** ४ । १३ ॥ पुत्राः विरूपः केतुमान् शम्भुश्च । ६ । १ ॥ अश्वमेधः । ४ । २२ ॥ द्वादशीव्रताचरणम् । २९ ॥ दुर्वाससा तन्मारणाय अभिचारेण कृत्यानिर्माणम् । ४६–७१ ॥ सुदर्शनस्तुतिः । ५ । ६ ॥

२ **अम्बरीषः** । क्ष० । सू० वं० । पिता मान्धाता । **न०** ६ । ३८ ॥ पितामहेन युवनाश्वेन पुत्रत्वेन स्वीकृतः । ७ । १ ॥

**अम्बालिका** । विचित्रवीर्यस्य भार्या । पुत्रः व्यासाज्जातः पाण्डुः । **न०** २२ । २३–२५ ॥

**अम्बिका** । विचित्रवीर्यस्य भार्या । पुत्रः व्यासाज्जातो-धृतराष्ट्रः । **न०** । २२ । २१–२६ ॥

**अम्बुधारा** । आयुष्मतो भार्या । पुत्रः ६ ऋषभः । **अ०** १३ । २० ॥

**अयनम्** । कालविशेषः । **तृ०** ११ । १२ । **पं०** २१ । ३–६ ॥

**अयःपानम्** । नरकः । **पं०** २६ । ७ । २९ ॥

**अयुतः** । क्ष० । सो० वं० । **न०** २२ । १० ।

**अयुताजित्** । क्ष० सो० वं० । भजमानस्य पुत्रः **न०** २४ । ८ ॥

१ **अयुतायुः** । क्ष० । सू० वं० । पिता सिन्धुद्वीपः । पुत्रः ऋतुपर्णः । **न०** ९ । १६ ॥

२ **अयुतायुः** । क्ष० । सो० वं० । **न०** २२ । ४६ ॥

**अयोग्यलक्षणम्** । **च०** ३ । १७ ॥ **पं०** ९ । १७ ॥ **ष०** ३ । २८–२९ ॥ **द०** १ । ५८ ॥ **ए०** ५ । ६–१० ॥ १० । २७–३३ ॥ १८ । ४०–४१

**अयोमुखः** । दनोः पुत्रोऽसुरः । **ष०** ६ । ३० ॥ १० । १९ ॥

**अराजकजनपददोषाः** । **च०** १४ । ३८ ॥

**अरिजित्** । क्ष० । सो० वं० । पिता कृष्णः । माता भद्रा । **द०** ६१ । १७ ॥

**अरिमर्दनः** । क्ष० । सो० वं० पिता श्वफल्कः । **न०** २४ । १६ ॥

**अरिष्टम्** । अपशकुनशब्दं पश्यत ॥

१ **अरिष्टः** । दनुपुत्रोऽसुरः । **ष०** ६ । ३० ॥

२ **अरिष्टः** । वृषभरूपी असुरः । कृष्णेन हतः । तस्य २ ककुद्मीति नामान्तरम् । **द०** ३६ । १–१५ ॥

१ **अरिष्टनेमिः** । क्ष० । सू० वं० । १ पुरुजितः पुत्रः । न० **१३** । २३–॥

२ **अरिष्टनेमिः** । ऋषिः । **प्र०** १९ । ९ ॥

**अरिष्टा** । कश्यपभार्या । दक्षपुत्री । पुत्रा गन्धर्वाः (अश्वाः) । **ष०** ६ । २५–२९ ॥

१ **अरुणः** क्ष० । सू० वं० । तत्पुत्रः त्रिबन्धनः । **न०** ७ । ४ ॥

२ **अरुणः** । दनुपुत्रोऽसुरः । **ष०** ६ । ३० ॥

३ **अरुणः** । नरकासुरपक्षीयोऽसुरः । **द०** ५९ । १२ ॥

४ **अरुणः** । तार्क्ष्यापरनाम्नः कश्यपस्य पुत्रः । माता विनता । **ष०** ६ । २२ ॥ सूर्यस्य सारथ्यकरणम् । **पं०** २१ । १६ ॥

**अरुणाः** । ऋषयः । **अ०** १३ । २५ । **प्र०** १९ । ११ ॥

**अरुणा** । प्लक्षद्वीपस्था नदी । **पं०** २० । ४ ॥

**अरुणिः** । ऋ० । ब्रह्मपुत्रः । **च०** ८ । १ ॥

**अरुणोदा** । मन्दरप्रभवा नदी । **पं०** १६ । १७ ॥

**अरुन्धती** । कर्दमप्रजापतिपुत्री । वसिष्ठस्य भार्या । **तृ०** २४ । २३ ॥ ऊर्जेति नामान्तरम् । च० **१** । ४० ॥

१ **अर्कः** । देवः । पिता धर्मप्रजापतिः । अष्टवसुष्वन्यतमः ॥ माता ३ वसुः । भार्या वासना । **ष०** ६ । ११–१३ ॥

२ **अर्कः** । क्ष० । सो० वं० । **न०** २१ । ३१ ॥

**अर्चा** । प्रतिमा । तद्विधितत्प्राशस्त्यादयः । **तृ०** २९ । २१–२७ ॥ **च०** ८ । ५४–६१ ॥ **द०** ८४ । १० ॥ ८६ । ५५ ॥ **ए०** २ । ४७ ॥ **११** । ४२ ॥ **२७** । ९–१६ ॥

१ **अर्चिः** । २ दक्षपुत्री । कृशाश्वस्य भार्या । **ष०** ६ । २० ॥

२ **अर्चिः** । पृथुचक्रवर्तिनो भार्या । महालक्ष्म्यंशभूता । **च०** १५ । २–६ ॥ **२३** । १९–२६ ॥

१ **अर्जुनः** । क्ष० । सो० वं० । पिता पाण्डुः । माता कुन्ती । इन्द्रांशभूतः । कृष्णस्तुतिः । **प्र–७** । २२–२५ ॥ अश्वत्थामप्रयुक्तब्रह्मशिरोस्त्रस्य प्रत्यस्त्रप्रयोगः । २९ ॥ द्वारकागमनम् । **१२** । ३६ ॥ युधिष्ठिरेण तन्मुखस्य विच्छायत्वकारणप्रश्नः **१४** । ३९–४४ ॥ युधिष्ठिराय कृष्णस्य परलोकगमनवृत्तान्तकथनम् । **प्र०** १५ ॥ भार्या द्रौपदी । पुत्रः श्रुतकीर्तिः । **न०** २२ । २७–२९ ॥ अन्या भार्या सुभद्रा । पुत्रः अभिमन्युः । ३३ ॥ तृतीया भार्या चित्राङ्गदा । पुत्रो बभ्रुवाहनः । चतुर्थी उलूपी । पुत्रः इरावान् । ३२ ॥ यतिवेषेण सुभद्रापहारः **द०** । ८६ । ३–१२ ॥ [मृतस्य ब्राह्मणशिशोः रक्षणप्रतिज्ञानम् । **द०** पू० ११० ॥] मित्रविन्दास्वयंवरे लक्ष्यवेधयत्नः । ८३ २४ ॥

२ **अर्जुनः** । क्ष० । सो० वं० । पिता कृतवीर्यः । **न०** १५ । १७–४१ ॥ वधः परशुरामेण । ३५ ॥ पुत्राः **२३** । २४–॥ अस्य कार्तवीर्यार्जुन इति प्रसिद्धं नाम ॥

**अर्जुनपालः** । क्ष० सो० वं० । **न०** २४ । ४४ ॥

**अर्जुनवृक्षौ** । कृष्णेन भग्नौ । **द०** १० । २३–२७ ॥

१ **अर्थः** । द्वितीयः पुरुषार्थः । **प्र०** २ । ९ ।

२ **अर्थः** । देवः । पिता धर्मप्रजापतिः । माता बुद्धिः । **च०** १ । ५१ ॥

**अर्थसिद्धिः** । साध्यानां पुत्रः **ष०** ६ । ७ ॥

**अर्यमा** । पिता कश्यपः । माता अदितिः । पत्नी मातृका । पुत्राः चर्षणयः । **ष०** ६ । ३९–४२ ॥ द्वादशादित्येष्वन्यतमः ॥

**अर्वाक्स्रोतसां सर्गः** । **तृ०** १० । २५ ॥

**अलकनन्दा** । कैलासस्था नदी। गङ्गायाः शाखाभूता । **च०** ६ । २४ ॥ **पं०** १७ । ५ । ९ ॥

**अलका** । कुबेरस्य पुरी। ध्रुवस्य गमनम् । **च०** १० । ५ ॥

**अलम्बुषा** । अप्सराः । तस्यां तृणबिन्दोः सकाशात् इडबिडानाम्न्याः पुत्र्याः, विशालः शून्यबन्धुः धूम्रकेतुः इति सुतत्रयस्य चोत्पत्तिः । **न०** २ । ३०–३३ ॥

**अलर्कः** । क्ष० । सो० वं० । द्युमतः पुत्रः । **न० १७** । ६–८ ॥ दत्तात्रेयस्य शिष्यः । **प्र० ३** । ११ ॥ **द्वि० ७** । ४४ ॥

**अवटनिरोधः** । नरकः । **पं० २६** । ७, ३४ ॥

**अवटोदा** । नदी । **पं० १९** । १८ ॥

**अवतारप्रयोजनम्** । **प्र० १** । १३ ॥ ८ । ३२–३५ ॥ १० । २५ ॥ **तृ० २** । १५ ॥ **५** । १६ । ४२ ॥ **१७** । ३१ ॥ २४ । १० । १८ । ३६ । ३७ ॥

**अवतारमालिका** । **प्र० ३** । १–२५ ॥ **द्वि० ७** । १–३८ ॥ **द० ४०** । १७–२२ ॥ **ए० ४** । ३–१३ ॥

**अवतारानुचरितम्** । ईशकथा । पुराणलक्षणम् । **द्वि० १०** । ५ ॥

**अवयवसृष्टिः** । **द्वि० १०** । १५-३२ ॥ **तृ० ६** । ११–३४ ॥

**अवधूतः** । ब्रा० । यदुराजेन संवादः । चतुर्विंशतिगुरुकथा । **ए० ७** । २४–९ । ३३ ॥

**अवन्ध्याः** । **प्र० ७** । ३५ ॥

**अवन्ती** । नगरी । **द० ४५** । ३१ ॥

**अवरोधनः** । क्ष० । पिता उगयः । **पं० १५** । १४ ॥

**अविज्ञातम्** । शाल्मलिद्वीपस्थं वर्षम् । **पं० २०** । ९ ॥

**अविज्ञातः** । पिता य(ज्व)ज्ञबाहुः । **पं० २०** । ९ ।

**अविद्या** । पाञ्चपर्वणी । सृष्टिः । **तृ० १२** । २ ॥ **२०** । १८ ॥ **प्र० ३** । ३३ ॥ **द्वि० ६** । २० ॥

**अविपक्वकषायः** । **प्र० ६** । २२ ॥

**अवीक्षित्** । क्ष० । सू० वं० । पिता करन्धमः । पुत्रो मरुत्तः । **न० २** । २६ ॥

**अवीचिः** । नरकः । **पं० २६** । ७ ॥ २८ ॥

**अव्यक्तम्** । श्रीतत्त्वम् । **तृ० ५** । २७ ॥

**अव्याकृतम्** । **तृ० ११** । ३७ ॥

**अशना** । महाबलेर्भार्या । **ष० १८** । १७ ॥ विन्ध्यावलिः कोटरा इति नामान्तरे ॥

**अशरीरवाक्** । नारदं प्रति । **प्र० ६** । २१ ॥ ३ भरतं प्रति **न० २०** । २० । कंसं प्रति । **द० १** । ३४ ॥ रुक्मिणं प्रति **द० ६१** । ३३ ॥

**अशोकः** । (विशोकः) त्रिपक्रायाः पुत्रः । पिता कृष्णः । **द० पृष्ठम्** । ११५ ॥

**अशोकवर्धनः** । **द्वा० १** । १३ ॥

**अश्मकः** । क्ष० । सू० वं० । कल्माषपादस्य पुत्रः । माता मदयन्ती । तत्पुत्रो मूलकः । **न० ९** । ४० ॥

**अश्वत्थामा** । ब्राह्मणः । पिता द्रोणाचार्यः । माता कृपी । रुद्रांशभूतः । तद्विषयकी कथा । **प्र० ७** । १३–५८ ॥

**अश्वमेधः** । क्रतुश्रेष्ठः । युधिष्ठिरस्य । **प्र० १२** । ३४ ॥ **तृ० ३** । १८ ॥ परीक्षितः **१६** । ३ ॥ पृथुचक्रवर्तिनः । **च० १९** ॥ इन्द्रस्य । **ष० १३** । १९ ॥ १ अम्बरीषस्य । **न० ४** । १३ ॥ ३ भरतस्य । **२०** । २५ ॥ वसुदेवस्य । **द० ८४** । ४२–॥ महाबलेः । **अ० १८** ॥ सगरस्य । **न० ८** । ८ ॥

**अश्वमेधजः** । क्ष० । सो० वं० । **न० २२** । ३९ ॥

**अश्वशिराः** । ऋ० । अथर्वणः पुत्रः । माता चित्तिः । **च० १** । ४२ ॥ दध्यङ् इति नामान्तरम् ॥

**अश्वसेनः** । क्ष० । सो०. वं० । पिता कृष्णः । माता सत्या । **द०** **६१** । १३ ॥

**अश्वाः** । सृष्टिः । **तृ०** **१०** । २२ ॥

**अश्विनौ** । सूर्यपुत्रौ नासत्यदस्रौ । बडवारूपधारिण्यां संज्ञादेव्यां जातौ । **प०** **६** । ४० ॥ च्यवनाय यौवनवयोदानम् । **न०** **३** । ११ ॥ माद्र्यां जातौ पुत्रौ नकुलः सहदेवश्च । **२२** । २८ ॥

**अष्टकः** । ऋ० । विश्वामित्रस्य पुत्रः । **न०** **१६** । ३६ ॥

**अष्टमं मन्वन्तरम्** । अधिपतिः सावर्णिः । **अ०** **१३** । ११ ॥

**अष्टवसवः** । ५ वसु शब्दं पश्यत ॥

**अष्टाङ्गयोगः** । तृ० २८ ॥

**अष्टादश अक्षौहिण्यः** । तृ० ३ । १४ ॥

**अष्टादशपुराणानि** । नामानि । **द्वा०** **७** । २३ ॥ लक्षणपञ्चकं दशकं च । ८–२३ ॥ तद्ग्रन्थसंख्या । **१३** ॥

**अष्टादशसिद्धयः** । **ए०** **१५** ॥

**असत्यम्** । **प्र०** **१७** । २५ ॥ अनृतशब्दं पश्यत ॥

**असमञ्जः** । क्ष० । सू० वं० । सगरस्य पुत्रः । माता केशिनी । पुत्रः अंशुमान् । **न०** **८** । १५ ॥

**असिक्नी** । पञ्चजनप्रजापतेर्दुहिता । २दक्षप्रजापतेर्भार्या । **ष०** **४** । ५१ ॥

**असितः** । ऋ० । देवलोऽप्ययमेवेति भाति । तत्तीर्थम् । **तृ०** १ । २२ ॥

**असिपत्रवनम्** । नरकम् । **पं०** **२६** । ७ । १५ ॥

**असीमकृष्णः** । क्ष० । **न०** २२ । ३९ ॥

**असुः** । प्राणशब्दं पश्यत ॥

**असुराः** । नामानि । **प०** १० । १९--२१ ॥ **अ०** १० ॥ जयः । **तृ०** १७ । १९ ॥ **प०** **७** । १७ ॥ **अ०** **५** । १५ ॥ १५ । ३३ ॥

**अस्तिः** । जरासन्धस्यपुत्री कंसस्य भार्या । **द०** ५० । १ ॥

**अहंतत्त्वम्** । **तृ०** ५ । २९ ॥ **प०** २५ ॥ **२६** । २३ ॥ **द्वि०** ५ । २४ ॥

**अहंयातिः** । क्ष० सो० वं० । बहुगवस्य पुत्रः । रौद्राश्वस्य पिता । **न०** २० । ३ ॥

**अहल्या** । मुद्गलऋषेः पुत्री । गोतमस्य भार्या । पुत्रः शतानन्दः । **न०** २१ । ३४ ॥

**अहिर्बुध्न्यः** । एकादशरुद्रेष्वन्यतमः । **प०** **६** । १८ ॥

**अहोरात्रमानम्** । **पं०** २१ । ४ ॥

## आ०

**आकाशः** । नभस्तत्त्वम् । **द्वि०** ५ । २५ ॥ **तृ०** **५** । ३२ ॥ **२६** । ३२ ॥

**१ आकूतिः** । स्वायंभुवमनुपुत्री । रुचिप्रजापतेर्भार्या । पुत्रो यज्ञनामा भगवान् । पुत्री दक्षिणा । **च०** **१** । १–॥ **द्वि०** ७ । २ ॥

**२ आकूतिः** । सर्वतेजसः पत्नी । **च०** **१३** । १४–॥

**३ आकूतिः** । पृथुषेणस्य भार्या । **पं०** **१५** । ६ ॥

**आगमः** । प्रमाणम् । **ए०** १९ । १७ ॥

**आग्नीध्रः** । प्रियव्रतस्य पुत्रः । माता बर्हिष्मती । **पं०** १ । २५ ॥ पूर्वचित्तिनाम्न्यामप्सरसि तस्य नवपुत्रोत्पत्तिः । २ । २--२० ॥

**आग्नीध्रकः** । ऋषिः । **अ०** **१३** । २८ ॥

**आङ्गिरसम्** । सत्रम् । **द०** २३ । ३ ॥

१ **आङ्गिरसी** । नदी । **पं०** २० । ४ ।

२ **आङ्गिरसी** । ४ वसुनामकवसोर्भार्या । पुत्रो विश्वकर्मा । **ष०** ६ । १५ ॥

**आजगरः** । अजगरवृत्तिः निरुद्यमः कश्चिद्ब्राह्मणः । प्रह्लादेन संवादः । **स०** १३ । ११--४५ ॥

**आज्यपाः** । पितरः । पत्नी दक्षपुत्री स्वधा । **च०** १ । ६३ ॥

**आण्डकोशः** । **तृ०** ११ । ३९ ॥

**आढ्यः** । गुणाढ्यः **ए०** १९ । ४३ ॥

**आततायी** । **प्र०** ७ । ५३ ॥

**आतपः** । विभावकनामकवसोः पुत्रः । माता १उषा । **ष०** ६ । १६ ॥

**आत्यन्तिकप्रलयः** । **द्वा०** ४ । ३४ ॥

**आथर्वणः** । दध्यङ् शब्दं पश्यत ॥

**आदित्यव्यूहः** । **द्वा०** ११ । ३०--॥

**आदित्याः** । द्वादश । **ष०** ६ । ३९ ॥ **द्वा०** ११ । ३२ ॥

**आदिदैत्यः** । हिरण्याक्षः । **द्वि०** ७ । १ ॥ **तृ०** १४ । २ ॥

**आदिराजः** । पृथुचक्रवर्ती । **च०** २० । ३२ ॥

**आदिशेषः** । सर्पराजः । माता कद्रूः । रूपवर्णनं स्तुतिश्च । **पं०** २५ । १--१५ ॥ **ष०** १६ । ३०--३२ ॥ चित्रकेतुना तत्स्तुतिः । ३४--४८॥

**आध्यात्मिकयोगः** । **तृ०** २५ । १३--॥

**आनकः** । क्ष० सो० वं० । शूरराजस्य पुत्रः । वसुदेवस्य भ्राता । **न०** २४ । २८ ॥ भार्या कङ्का । ४१ ॥

**आनकदुन्दुभिः** । वसुदेवस्य नामान्तरम् । **न०** २४ । २९--३० ॥

**आनर्तः** । क्ष० सू० वं० । शर्यातिः पुत्रः । तत्पुत्रो रेवतः । **न०** ३ । २७ ॥

**आनर्ताः** । आनर्तेन निर्मितो देशः । **न०** ३ । २८ ॥

**आनुः** । अनुशब्दं पश्यत ॥

**आन्ध्रः** । क्ष० सो० वं० । बलिराजस्य भार्यायां दीर्घतमस ऋषेर्जातः पुत्रः । **न०** २३ । ५ ॥

**आन्ध्रवंशः** । **द्वा०** १ । २२--॥

**आन्वीक्षिकी** । विद्या । दत्तात्रेयेण स्वशिष्येभ्यः प्रह्लादादिभ्य उपदिष्टा । **प्र०** ३ । ११ ॥

**आपः** । जलशब्दं पश्यत । **द्वि०** १० । १० ॥

**आप्यायनम्** । शाल्मलिवर्षस्य नामान्तरम् । **पं०** २० । ९ ॥

१ **आमः** । क्रौञ्चस्य नामान्तरम् । **पं०** २० । २१ ॥

२ **आमः** । क्ष० सो० वं० । पिता कृष्णः । माता सत्या । **द०** ६१ । १३ ॥

**आम्बः** । क्ष० सो० वं० । पिता कृष्णः माता नाग्नजिती । **प्र०** १० । २९ ॥

१ **आयतिः** । मेरुपर्वतपुत्री । धातुर्भार्या । पुत्रः मृकण्डुः **च०** १ । ४४ ॥

२ **आयतिः** । क्ष० सो० वं० । नहुषस्य पुत्रः । **न०** १८ । १ ॥

१ **आयुः** । प्राणनामकवसोः पुत्रः । **ष०** ६ । १२ ॥

२ **आयुः** । क्ष० सो० वं० । पुरूरवसः पुत्रः । **न०** १५ । १ ॥ पुत्राः नहुषादयः पञ्च । १७ । १ ॥

**३ आयुः** । क्ष० सो० वं० । पुरुहोत्रस्य पुत्रः । **न०** **२४** । ६ ॥

**४ आयुः** । जीवितकालः । तस्य व्ययः । **प्र० १६** । १० ॥ **१७** । १० ॥ **द्वि०** १ । ३ ॥ **३** । १७ ॥ **स० ६** । ६ ॥

**५ आयुः** । क्ष० सो० वं० । पिता कृष्णः । माता भद्रा **द०** ६१ । १७ ॥

**आयुर्दा** । शाकद्वीपस्था नदी । **पं०** २० । २६ ॥

**आयुर्वेदः** । **द्वि** ७ । २१ ॥ **तृ० १२** । ३८ ॥ **अ०** ८ । ३५ ॥ **न० १७** । ४ ॥

**आयुष्मान्** । ६ ऋषभस्य पिता । भार्या अम्बुधारा । **अ० १३** । २० ॥

**आरब्धः** । क्ष० सो० वं० । सेतोः पुत्रः । तत्पुत्रः गान्धारः । **न०** २३ । १५ ॥

**आर्जवम्** । गुणः । **प्र० १६** । २७ ॥

**आर्यकः** । धर्मसेतुनामकभगवदवतारस्य पिता । भार्या वैधृता । **अ० १३** । २६ ॥

**आर्यका** । क्रौञ्चद्वीपस्था नदी । **पं०** २० । २१ ॥

**आर्यावर्तः न०** ६ । ५ ॥

**आर्षभाः** । ऋषभदेवपुत्राः । **पं० ४** । **११** ॥ तेषां निमिसत्रगमनम् । **ए० २** । १४-५ । ४९ ॥

**आर्ष्टिषेणः** । ऋ० । **प्र०** १९ । १० ॥ **द्वि० ७** । ४५ ॥

**आवन्त्यः** । ऋ० । सुकर्मणः शिष्यः । **द्वा०** ६ । ७७ ॥

**आवरणः** । १ भरतस्य पुत्रः । **पं० ७** । ३ ॥

**आवर्तनः** । जम्बूद्वीपस्य उपद्वीपः । **पं०** १९ । ३० ॥

**आविर्होत्रः** । १ ऋषभदेवस्यपुत्रः **पं० ४** । ११ ॥ निमिराजाय ज्ञानोपदेशः । **ए० ३** । ४३ ॥

**आशीः** । भगनामकादित्यस्य पुत्री । **ष०** १८ । २ ॥

**आश्रमाः** । ब्रह्मचर्यादयश्चत्वारः । **तृ०** १२ । ४१ ॥ **ए०** १८ । ४१ ॥ **स० ११–१४** ॥

**आश्रमापशदाः** । **स० १५** । ३८ ॥

**आश्रयः** । पुराणलक्षणम् । परंब्रह्म परमात्मा । **द्वि०** १० । १ । ७ ॥ तदुक्तिः द्वादशे स्कन्धे ॥

**आश्विनमासः** । इषमासः **द्वा० ११** । ४३ ॥

**आषाढमासः** । शुचिमासः । **द्वा० ११** । ३६ ॥

**आसङ्गः** । क्ष० सो० वं० । श्वफल्कस्य पुत्रः । **न०** **२४** । १६ ॥

**आसनप्रकाराः** । **ए० १४** । ३२ ॥

**आसुरिः** ऋ० । कपिल ऋषेः शिष्यः । **प्र०** । **३** । १० ॥ **ष० १५** । १४ ॥

**आसुरी** । देवजितो भार्या । **पं०** १५ । ३ ॥

**आस्तिक्यम्** । **प्र०** १६ । २९ ॥

**आहुकः** । क्ष० सो० वं० । पुनर्वसोः पुत्रः । पुत्रौ उग्रसेनः देवकश्च । **न०** २४ । २९ ॥

**आहुकी** । आहुकस्य स्वसा । **न० २४** । २१ ॥

## इ

**इक्षुमती** । नदी । **पं०** १० । १ ॥

**इक्षुरसोदः** । द्वितीयो महासमुद्रः । **पं०** २० । ७ ॥

**इक्ष्वाकुः** । वैवस्वतमनोः पुत्रः । माता श्रद्धा । **अ०** **१३** । २ ॥ **न०** १ । ११–॥ तत्पुत्राः । **न०** **६** । ४ ॥

**इज्या** । **तृ० १२** । ३७ ॥

**इज्यामूर्तिः** । **प्र० १७** । ३४ ॥

**इडविडा** । (इडविला) विश्रवसो भार्या । पिता तृणबिन्दुः । माता अलम्बुषा । पुत्रः ऐडविलः कुबेरः । **न० २** । ३१ ॥

**इडस्पतिः** । तुषितेष्वन्यतमः । **च० १** । ७ ॥

**इतिहासपुराणानि** । **प्र० ४** । २० ॥ **तृ० १२** । ३९ ॥

**इध्मः** । तुषितेष्वन्यतमः । **च० १** । ७ ॥

**इध्मजिह्वः** । प्रियव्रतस्य पुत्रः । **पं० १** । २५ ॥

**इन्द्रः** । प्रतिमन्वन्तरम् एकैक इति चतुर्दशस्वपि मन्वन्तरेषु चतुर्दशाधिपतीनां साधारणमिदं पदकृतं नाम । तेषां प्रातिस्विकानि नामानि तु-यज्ञः १, रोचनः २, सत्यजित् ३, त्रिशिखः ४, विभुः ५, मन्त्रद्युम्नः (मन्द्रद्युम्नः) ६, पुरंदरः ७, महाबलिः ८, अद्भुतः ९, शम्भुः १०, वैधृतः ११, ऋतधामा १२, दिवस्पतिः १३, शुचिः १४, इति । इदानींतनेषु भारतभागवतादिषु पुराणादिषु विद्यमानाः गोत्रभित्–वज्री पुरुहूतः इत्यादयः शब्दाः पुरन्दरमेव बोधयन्ति ॥

**इन्द्रद्युम्नः** । पाण्ड्यदेशाधिपो राजा । **अ० ४** । **७** ॥

**इन्द्रप्रमदः** । ऋ० । **प्र० ९** । ७ ॥ **१९** । ९ ॥

**इन्द्रप्रमितिः** । ऋ० । पैलस्य शिष्यः । तच्छिष्यो माण्डूकेयः । **द्वा० ६** । ५४ ॥

**इन्द्रयागः** । **द० २४** ॥

**इन्द्रलोकः** । वर्णनम् । **स० ४** । ८–१८ ॥ **अ० १५** । १२–२२ ॥

**इन्द्रवाहः** । क्ष० सू० वं० । पुरंजयः ककुत्स्थ इति नामान्तरे । **न० ६** । १२ ॥

**इन्द्रशत्रुः** । वृत्रः । **ष० ११** । १० ॥

**इन्द्रसावर्णिः** । चतुर्दशो मनुः । **अ० १३** ३३ ॥ तस्य मन्वन्तरम् । ३५ ॥

**१इन्द्रसेनः** । महाबलिः । **अ० २२** । १३ ॥

**२इन्द्रसेनः** । देवऋषभस्य पुत्रः । **ष० ६** । ५ ॥

**३इन्द्रसेनः** । प्लक्षद्वीपस्थः पर्वतः । **पं० २०** । ४ ॥

**४इन्द्रसेनः** । क्ष० सू० वं० । पिता कूर्चः । पुत्रो वीतिहोत्रः । **न० २** । १९ ॥

**इन्द्रस्पृक्** । ऋषभदेवस्य पुत्रः । **पं० ४** । १० ॥

**इन्द्रियाणि** । **द्वि० १** । ३९ ॥ **तृ० ६** । १२–२५ ॥ **द्वि० ३** । २० ॥ गोलकानि । **द्वि० ६** । १–१४ ॥ **१०** । १८–३२ ॥ अभिमानिनः । **द्वि० ५** । ३०–३१ ॥ **६** । १–१० ॥ उत्पत्तिर्भगवतोऽवयवेभ्यः । **द्वि० १** । २९ ॥ तज्जयमहिमा । **पं० १** । १७ ॥

**इध्मवाहः** । ऋ० । अगस्त्यस्य पुत्रः । माता लोपामुद्रा । **प्र०१९** । ९ ॥

**इरा** । ४ इलाशब्दं पश्यत ॥

**इरावान्** । अर्जुनस्य पुत्रः । माता उलूपी **न० २२** । ३२ ॥

**१इला** । प्राचेतसदक्षपुत्री । कश्यपस्य भार्या । पुत्रा भूरुहाः । **ष० ६** । २५ । २८ ॥

**२ इला** । इक्ष्वाकोरपत्यम् । सुद्युम्न इति नामान्तरम् । **न० १** । १६–२२ ॥ तस्यां बुधेन समागमात् पुरूरवोनामकपुत्रोत्पत्तिः । ३५ ॥ शेषं सुद्युम्नशब्दे पश्यत ॥

**३ इला** । वायोः पुत्री । ध्रुवस्य द्वितीया भार्या । **च० १०** । २ ॥

**४ इला** । वसुदेवस्य भार्या । **न० २४** । ४९ ॥

**इलावर्तः** । ऋषभदेवस्य पुत्रः । **पं० ४** । १० ॥

**इलावृतः** । पिता आग्नीध्रः । भार्या लता । **पं० २** । १९, २३ ॥

**इलावृतम्** । जम्बूद्वीपस्थं वर्षम् । **पं० १६** । ७ ॥ **१७** । १५–२४ ॥

**इल्वलः** । असु० । पिता ह्रादः । माता धमनी । भ्राता वातापिः । **ष० १८** । १५ ॥

**इषंधराः** । शाल्मलिद्वीपस्था जनाः । **पं० २०** । ११ ॥

**१ इषः** । वत्सरस्य पुत्रः । माता स्वर्वीथी । च० **१३** । १२ ॥

**२ इषः** । आश्विनमासः ॥ **द्वा० ११** । ४३ ॥

**इषुकारः** । चतुर्विंशतिगुरुष्वन्यतमः । **ए० ९** । ११–१३ ॥

**इषुमान्** । क्ष० सो० वं० । **न० २४** । ४१ ॥

**इष्टं धनम्** । धर्मः । **ए० १९** । ३९ ॥

## ई०

**ईशः** । गुणेष्वसक्तधीः **ए० १९** । ४४ ॥

**ईशकथा** । पुराणलक्षणम् । हरेस्तद्भक्तानां च कथाऽस्मिन्ग्रन्थे तत्र तत्रोक्ता ॥ **द्वि० १०** । ५ ॥

**ईशानः** । प्लक्षद्वीपस्थः पर्वतः । **पं० २०** । २६ ॥

**ईशावास्यमिति** । मन्त्रार्थः । **अ० १** । ९–१६ ॥

**ईशित्वम्** । सिद्धिः । **ए० १५** । १५ ॥

**ईश्वरास्तित्वम्** । च० **२१** । २६–२९ ॥

## उ०

**उक्थम्** । **प्र० १५** । ६ ॥

**उक्थ्यः** । यागः । **तृ० १२** । ४० ॥

**उग्रः** । एकादशरुद्रेष्वन्यतमः । **ष० ६** । १७ ॥

**उग्रदंष्ट्री** । मेरोः पुत्री । **पं० २** । १९–२३ ॥

**उग्रसेनः** । क्ष० सो० वं० । आहुकस्य पुत्रः । तत्पुत्र कंसः । **न० २४** । २१–२४ ॥ राज्ये पट्टाभिषेकः । **द० ४५** । १२ ॥

**उग्रायुधः** । क्ष० सो० वं० । नीपस्य पुत्रः । **न० २१** । २९ ॥

**उचथ्यः (उतथ्यः)** । ऋ० । अङ्गिरसः पुत्रः । माता श्रद्धा । **च० १** । ३५ ॥ भार्या ममता । **न० २०** । ३७ ॥

**उच्चैःश्रवाः** । इन्द्रस्याश्वः । उत्पत्तिः क्षीरसमुद्रात् । **अ० ८** । ३ ॥

**उतङ्कः** । **(उत्तङ्कः)** उदङ्कशब्दं पश्यत ॥

**उतथ्यः** । उचथ्यशब्दं पश्यत ॥

**उतामृतत्वस्येशान** । इति मन्त्रार्थः । **द्वि० ६** । १७ ॥

**उत्कचः** (उत्कटः । उत्कलः) असु० हिरण्याक्षस्य पुत्रः । **स० २** । १८ ॥

**उत्कटः** । उत्कचशब्दं पश्यत ॥

**१ उत्कलः** । उत्कचशब्दं पश्यत ॥

**२ उत्कलः** । क्ष० सू० वं० । २सुद्युम्नस्य पुत्रः । **न० १** । ४१ ॥

**उत्कला** । संराजो भार्या । **पं० १५** । १४ ॥

**उत्क्रमणम्** । **तत्प्रकारः** । **द्वि० २** । १९–३० ॥ **च० ४** । २५ । **२३** । १३–१८ ॥

**उत्क्रान्तिः** । उत्क्रमणशब्दं पश्यत ॥

**१ उत्तमः** । उत्तानपादस्य पुत्रः । माता सुरुचिः । **च० ८** । ९ ॥ राक्षसैर्हतः । **१०** । ३ ॥

**२ उत्तमः** । तृतीयो मनुः । **पं० १** । २८ ॥ तत्पुत्राः । **अ० १** । २३ ॥

**उत्तमप्रायश्चित्तम्** । **ष० १** । ११–१९ ॥ **२** । १६ ॥ **३** । २४–३३ ॥

**उत्तरः** । विराटस्य पुत्रः । तत्पुत्री इरावती । **प्र० १६** । २ ॥

**उत्तरकुरवः** । देशः । **पं १८** । ३४–३९ ॥

**उत्तरा** । विराटराजपुत्री । अभिमन्योर्भार्या । पुत्रः २ परीक्षित् । **तृ० ३** । १७ ॥

**उत्तरायणम्** । **पं० २१** । ३–६ ॥

**उत्तानपादः** । क्ष० । स्वायंभुवमनोः पुत्रः । **च० १** । ९ ॥ पुत्रो ध्रुवः उत्तमश्च । कथा । **८ –९** ॥

**उत्तानबर्हिः** । क्ष० सू० वं० । पिता शर्यातिः । **न० ३** । २७ ॥

**उत्पथः** । चित्तविक्षेपः । अमार्गः । **ए० १९** । ४२ ॥

**उत्पाताः** । अपशकुनशब्दं पश्यत ॥

**उत्सर्गः** । देवः । मित्रस्य पुत्रः । माता २ रेवती । **ष० १८** । ६ ॥

**उदक्स्वनः** । क्ष० सो० वं० । ३ विष्वक्सेनस्य पुत्रः । पुत्रो भल्लादः । **न० २१** । २६ ॥

**उदङ्कः** । (उत्तङ्कः) ऋ० । कुवलयाश्वेन धुन्धुनामकासुरघातनम् । **न० ६** । २२ ॥

**उदावसुः** । क्ष० सू० वं० । मिथेः पुत्रः । **न० १३** । १४ ॥

**उदासीनः** । **द्वि० ९** । ३ ॥

**उद्गीथः** । क्ष० । पिता भूमा । माता ऋषिकुल्या । **पं० १५** । ६ ॥

**उद्धवः** । क्ष० सो० वं० । [ वसुदेवभ्रातुर्देवभागस्य पुत्रः । माता कंसा । सः बृहस्पतेः शिष्यस्तदंशश्च । कृष्णस्य मन्त्री भक्तश्च । ] नन्दव्रजगमनम् । **द० ४६** ॥ कृष्णेन तत्त्वोपदेशः । **ए० ६** । ४१–॥ कृष्णस्तुतिः । **२९** । ३–॥ विदुरेणसंवादः । **तृ० २–४** ॥ तस्य वस्वंशत्वम् । **४** । १ ॥ बदरिकागमनम् । **तृ० ४** । ३२ ॥ **द्वा० २९** । ४७ ॥

**उद्यानवर्णनम्** । **च० ९** । ६३ ॥ **२५** । १७ ॥ **अ० २** । ९ ॥

**उन्नतिः** । दक्षस्य पुत्री । धर्मप्रजापतेर्भार्या । तत्पुत्रो दर्पः । **च० १** । ५१ ॥

**उपगुप्तः** । (उपगुरुः) । क्ष० सू० वं० । **न० १३** । २४ ॥

**उपदानवी** । वैश्वानरस्य पुत्री । हिरण्याक्षस्य भार्या । **ष० ६** । ३४ ॥

**१ उपदेवः** । रुद्रसावर्णेः पुत्रः । **अ० १३** । २७ ॥

**२ उपदेवः** । क्ष० सो० वं० । अक्रूरस्य पुत्रः । **न० २४** । १७–१८ ॥

**३ उपदेवः** । क्ष० सो० वं० । देवकस्य पुत्रः । **न० २४** । २२ ॥

**उपदेवा** । क्ष० सो० वं० । देवकस्य पुत्री । वसुदेवस्य भार्या । **न० २४** । २३ ॥

**१ उपनन्दः** । क्ष० सो० वं० । पिता वसुदेवः । माता मदिरा । **न० २४** । ४८ ॥

**२ उपनन्दः** । गोपवृद्धः । **द० ११** । २२ ॥

**उपबर्हणः** । गन्धर्वः । तस्य विश्वसृजां शापेन शूद्रत्वप्राप्तिः । ततोऽन्यजन्मनि नारदत्वेनोत्पत्तिः । **स० १५** । ६९–७३ ॥

**उपबर्हिणः** । क्रौञ्चद्वीपस्थः पर्वतः । **पं० २०** । २१ ॥

**उपरतिः** । विषयालंबुद्धिः । **प्र० १६** । २७ ॥
**उपरागः** । सूर्यचन्द्रयोः राहुग्रहणम् । **पं० २४** । २ ॥ सूर्योपरागः । **द० ८२** ॥
**उपरिचरः** । ७ वसुशब्दं पश्यत ॥ **न० २२** । ५--६ ॥
**उपवेदाः** । आयुर्वेदः धनुर्वेदः गान्धर्ववेदः स्थापत्यवेदश्च । **तृ० १२** । ३८ ॥
**उपश्लोकः** । ब्रह्मसावर्णेः पिता । **अ० १३** । २१ ॥
**उपस्थम्** । स्त्रीणां जननेन्द्रियम् । **द्वि० ६** । ८ ॥ १० । २६
**उपेन्द्रः** । २ जयन्तशब्दं पश्यत ॥
**उपेन्द्रदत्तः** । शुकाचार्यः । **द्वि० ७** । ४५ ॥
**उभयस्पृष्टिः** । (**उभयसृष्टिः**) शाकद्वीपस्था नदी । **पं० २०** । २६ ॥
**उरुः** । क्ष० । इन्द्रसावर्णेः पुत्रः । **अ० १३** । ३३ ॥
**उरुक्रमः** । त्रिविक्रमः । माता अदितिः । पिता कश्यपः । भार्या कीर्तिः । पुत्रो बृहच्छ्लोकः । **ष० ६** । ३९ ॥ **१८** । ८ ॥ वामन एवायम् । शेषं तत्र पश्यत ॥
**उरुक्रियः** । क्ष० सू० वं० । **न० १२** । १० ॥
**उरुशृङ्गः** । शाकद्वीपस्थः पर्वतः । **पं० २०** । २६ ॥
**उरुश्रवाः** । क्ष० सो० वं० । **न० २** । २० ॥
**उर्वशी** । अप्सराः । मित्रावरुणशापात् पुरूरवसि वासः । **न० १४** । १६--४९ ॥ पुत्रोत्पत्तिः । **१५** । १ ॥ पुरूरवसे हितोपदेशः । **१४** । ३६--३९ ॥ **ए० २६** । १४--१६ ॥ भगवतो नारायणस्य देहात् ( ऊरुप्रदेशात् ) उत्पत्तिः । **ए० ४** । १५ ॥ मार्गशीर्षमासनेतृत्वम् । **द्वा० ११** । ४१ ॥ मित्रावरुणाभ्यां तस्या दर्शनम् । **ष० १८** । ५--६ ॥
**उलूकिका** । (**उलूपिका**) पूतना । **द्वि० ७** । २७ ॥
**उलूपी** । नागकन्या अर्जुनभार्या । पुत्रः इरावान् ॥ **न० २२** । ३२ ॥
**उल्मुकः** । क्ष० । चक्षुर्नामकमनोः पुत्रः । माता नड्वला । भार्या पुष्करिणी । पुत्राः १अङ्गः १सुमनाः १ख्यातिः २क्रतुः ३अङ्गिराः १गयः इति षट् । **च० १२** । १७ ॥
**उल्बणः** । ऋ० । वसिष्ठपुत्रः । **च० १** । ४१ ॥
**उशना** । कवेः पुत्रः । **च० १** । ४५ ॥ तस्य तीर्थम् । **तृ० १** । २२ ॥
**उशिकः** । क्ष० सो० वं० । १ कृतेः पुत्रः । तत्पुत्रः चेदिः । **न० २४** । २ ॥
**उशीनरः** । क्ष० सो० वं० । महामनसः पुत्रः । तत्पुत्राः २ शिबिप्रभृतयः । **न० २३** । २ ॥
**उशीनरराजः** । सुयज्ञः । **स० २** । २८ ॥
१ **उषा** । विभावसुनामकवसोर्भार्या । **ष० ६** । १६ ॥
२ **उषा** । (ऊषा) बाणासुरपुत्री । विवाहोऽनिरुद्धेन । **द० ६२--६३** ॥
**उष्णिक्** । छन्दः । प्रजापतेरुत्पन्ना । **तृ० १२** । ४५ ॥

## ऊ०

**ऊतयः** । पुराणलक्षणम् । जीवानां संसारहेतुभूतानि नानाविधकर्माणि । **द्वि० १०** । ४ ॥
१ **ऊर्जः** । क्ष० । वत्सरस्य पुत्रः । माता स्वर्वीथी । **च० १३** । १२ ॥

**मः** । भूशब्द पश्यत

**भूमित्रः** । कण्वस्य २ वसुदेवस्य पुत्रः । **द्वा० १** । २० ॥

**भूरिः** । क्ष० सो० वं० । सोमदत्तस्य पुत्रः । **न० २२** । १८ ॥

**भूरिश्रवाः** । क्ष० सो० वं० । सोमदत्तस्य पुत्रः । **न० २२** । १८ ॥

१ **भूरिषेणः** । ब्रह्मसावर्णेः पुत्रः । **अ० १३** । २१ ॥

२ **भूरिषेणः** । क्ष० सू० वं० । शर्यातेः पुत्रः । **न० ३** । २७ । **द्वि० ७** । ४५ ॥

**भूवराहः** । वराहशब्दं पश्यत ॥

१ **भृगुः** । ब्रह्मणस्त्वच उत्पन्नो मानसः पुत्रः । **तृ० १२** । २३ ॥ भार्या कर्दमपुत्री ख्यातिः । तत्पुत्री श्रीदेवी । **२४** । २३ ॥ पुत्रौ धाता विधाता कविश्च । **च० १** । ४३–४५ ॥ शिवभक्तेभ्यः शापदानम् । **२** । २७ ॥ मणिमता बन्धनम् । **५** । १७ ॥ वीरभद्रेण तस्य श्मश्रुलुञ्चनम् । १९ ॥ तत्कृता भगवत्स्तुतिः । **७** । ३० ॥ अयं महादेवावज्ञानान्मृत इति पुराणान्तरकथा ॥

२ **भृगुः** । पूर्वोक्त एव पुनश्चाक्षुपे मन्वन्तरे वरुणस्य यज्ञीयाग्निकुण्डादुत्पन्नः । अत एवास्य वारुणिभृगुरिति प्रसिद्धिः । वरुणभार्यायां चर्षण्यां जात इत्युक्तिस्त्वौपचारिकी । **ष० १८** । ४ ॥ [तत्पुत्रो भूतप्रजापतिः ॥ ]

[ **भोजकटः** । रुक्मिणा स्वावासार्थं निर्मितं पुरम् ॥ **द० ५४** । ५२ ॥]

**भोजनः** । क्रौञ्चद्वीपस्थः पर्वतः । **पं० २०** । २१ ॥

**भोजाः** । क्ष० सो० वं० । महाभोजवंशोत्पन्नाः । **न० २४** । ११ ॥

**भौमः** । नरकासुर शब्दं पश्यत ॥

**भौमस्वर्गः** । भारतव्यतिरिक्ताण्यष्टौ वर्षाणि । **पं० १७** । ११–१३ ॥

**भौवनः** । मन्थोः पुत्रः । तद्भार्या दूषणा । तत्पुत्रः १ त्वष्टा । **पं० १५** । १५ ॥

**भ्रमरगीता** । गोपीभिः । **द० ४७** । १२–२१ ॥

**भ्रमिः** । ध्रुवस्य भार्या । शिशुमारप्रजापतेर्दुहिता । तत्पुत्रौ कल्पो वत्सरश्च । **च० १०** । १ ॥

**भ्राजिष्ठः** । क्रौञ्चद्वीपस्थः पर्वतः । **प० २०** । २१ ॥

**मकरः** । मेरोरुत्तरदिक्स्थः पर्वतः । **पं० १६** । २७ ॥

**मङ्गलप्रस्थः** । भारतवर्षस्थः पर्वतः । **पं० १९** । १६ ॥

**मणिकूटः** । प्लक्षद्वीपस्थः पर्वतः । **पं० २०** । ३ ॥

**मणिग्रीवः** । कुबेरस्य पुत्रः । अर्जुनवृक्षशब्दं पश्यत ॥

**मणिमान्** । रुद्रपार्षदः । नेन भृगोर्बन्धनम् । **च० ५** । १७ ॥

**मण्डोदरी** । रावणस्य भार्या । **न० १०** । २४ ॥

**मत्स्यावतारः** । **प्र० ३** । १५ ॥ **१५** । ३५ ॥ **द्वि० ७** । १२ ॥ सत्यव्रतराज्ञा पोषितस्य तस्य दिनेदिनेऽभिवृद्ध्यादिकथा । **अ० २४** ।

**मत्सरः** । अन्यशुभद्वेषाख्यो दोषः । **प्र० १८** । १० ॥

**मत्स्याः** । देशविशेषः । विराटराजस्य । **प्र० १०** । ३४ ॥ **तृ० १** । २४ ॥

१ **मथुरा** । **मधुरा** इत्यपि । पूर्वं लवणावासभूतं मधुवनम् । **न० ११** । १४ ॥ शूरसेनानां राजधानी । तत्र वज्रस्य राज्याभिषेकः । **प्र० १५** । ३९ ॥ तत्र श्रीकृष्णस्य गमनम् । **द० ४१** । २०–५२ ॥

**२ मथुरा**। दक्षिणदेशस्था पाण्ड्यानां राजधानी। द० ७९। १५॥

**मदः**। दोषः। प्र० १७। २४। ३९॥

**मदयन्ती**। सौदासस्य भार्या। न० ९। १८॥

**मदिरा**। वसुदेवस्य भार्या। पुत्राः नन्दः उपनन्दः कृतकः इत्याद्याः। न० २३। ३॥

**मद्रः**। शिबिराजस्य पुत्रः। न० २३। ३॥

**१ मधुः**। बिन्दुमतः पुत्रः। भार्या २ सुमनाः। पुत्रः वीरव्रतः। पं० १५। १५॥

**२ मधुः** असुरः। पुत्रो लवणः। न० ११। १४॥

**३ मधुः**। क्ष० सो० वं०। कार्तवीर्यार्जुनस्य पुत्रः। तत्पुत्रो वृष्णिः। न० २३। २७–२९॥

**४ मधुः**। क्ष० सो० वं०। देवक्षत्रस्य पुत्रः। न० २४। ५॥

**५ मधुः**। चैत्रमासः। द्वा ११। ३३॥

**मधुकरात्** शिक्षिता गुणाः। ए० ८। ९–१२॥

**मधुकुल्या**। कुशद्वीपस्था नदी। पं० २०। १५॥

**मधुघ्नात्** शिक्षिता गुणाः। ए० ८। १५–१६।

**मधुच्छन्दाः**। ऋषिः। विश्वामित्रस्य पुत्रः। न० १६। २९॥

**मधुरा**। मथुराशब्दं पश्यत॥

**मधुरुहः**। क्रौञ्चद्वीपस्थं वर्षम्। पं० २०। २१॥

**मधुवनम्**। यमुनातीरस्थं वनम्। तत्र ध्रुवेण तपश्चरणम् च० ८। ६२॥ तत्र भगवत आगमनम्। ९। १॥ तदेव पूर्वं लवणासुरस्यावासभूतम्। न० ११। १४॥

**मध्यंदिनम्**। पुष्पार्णस्य पुत्रः। माता प्रभा। च० १३। १३॥

**मनः**। इन्द्रियम्। द्वि० ५। ३०॥ १०। ३०॥ तृ० ५। ३०॥ ६। २४॥

**मनःप्रसादः**। गुणः। द्वि० १। १९॥

**मनस्तत्वम्**। मनःशब्दं पश्यत॥

**मनस्युः**। क्ष० सो० वं०। प्रवीरस्य पुत्रः। तत्पुत्रः चारुपदः। न० २०। २॥

**१ मनुः**। कृशाश्वस्य पुत्रः। माता धिषणा। प० ६। २०॥

**२ मनुः**। चतुर्दशानामपि मन्वन्तराधिपतीनां साधारणं नाम। तेषां नामानि। स्वायंभुवः १। स्वारोचिषः २। उत्तमः ३। तामसः (तापसः) ४। रैवतः ५। चाक्षुषः ६। वैवस्वतः ७। सावर्णिः ८। दक्षसावर्णिः ९। ब्रह्मसावर्णिः १०। धर्मसावर्णिः ११। रुद्रसावर्णिः १२। देवसावर्णिः १३। इन्द्रसावर्णिः १४। इति॥

**मनोजयः**। द्वि० १। १९॥ ए० १५। २१॥

**मनोजवः**। शाल्मलिद्वीपस्थं वर्षम्। पं० २०। २५॥

**मन्त्रम्**। वासुदेवद्वादशाक्षरमन्त्रम्। च० ८। ५४॥ नारायणाष्टाक्षरमन्त्रम्। प० ६। ६॥ विष्णुषडक्षरमन्त्रम्। १०॥ हयग्रीवमन्त्रम्। पं० १८। २॥ नृसिंहमन्त्रम्। ८॥ हृषीकेशमन्त्रम्। १८॥ मत्स्यमूर्तिमन्त्रम्। २४॥ कूर्ममूर्तिमन्त्रम्। ३०॥ वराहमन्त्रम्। ३५॥ दाशरथिराममन्त्रम्। १९। ३॥ नरनारायणमन्त्रम्। ११॥ रुद्रमन्त्रम्। पं १७। १७॥

**मन्त्रमाला**। कुशद्वीपस्था नदी। पं० २०। १५॥

**मन्त्रमूर्तिः**। प्र० ५। ३८॥ ए० ८। ९॥

**मन्थुः**। वीरव्रतस्य पुत्रः। भार्या १ सत्या। पुत्रो भौवनः। पं० १५। १५॥

**मन्दरः** । मेरोरवष्टम्भपर्वतः । पं० १६ । ११ ॥ तस्य समुद्रमथनार्थं नयनम् । अ० ६ । ३३ ॥ प्र० ३ । १६ ॥

**मन्दरहरिणः** । जम्बूद्वीपस्योपद्वीपः पं० । १९ । ३० ॥

**मन्दाकिनी** । नदी । पं० १९ । १८ ॥

**मन्दोदरी** । रावणस्य भार्या । न० १० । ८ ॥

**मन्द्द्रुमः** । चाक्षुषमन्वन्तरीय इन्द्रः । अ० ५ । ८ ॥

**१ मन्युः** । क्ष० सो० वं० । वितथस्य पुत्रः । तत्पुत्राः बृहत्क्षत्रः जयः महावीर्यः नरः गर्ग इति पञ्च । न० २१ । १ ॥

**२ मन्युः** । क्रोधः । प्र० १८ । २९ ॥

**मन्वन्तरम्** । पुराणलक्षणम् । सद्धर्म इति नामान्तरम् । सतां मन्वन्तराधिपतीनां धर्मः । द्वि० १० । ४ ॥

**मन्वन्तराणि** । मनूनां भुक्तिकालाः । तृ० ११ । २४ । अ० १ । १७–३० ॥ ५ । २–१० ॥ १३ । १–२६ ॥ १४ । १–११ ॥

**ममता** । उचथ्यऋषेर्भार्या । तस्यां देवरात् बृहस्पतेर्जातः पुत्रः भरद्वाजः । न० २० । ३५–३८ ॥

**मयः** । असुरः । तस्य खाण्डवदाहान्मोचनम् । द० ५८ । २७ ॥ प्र० १५ । ८ ॥ तत्पुत्रो बलः अतललोकाधिपतिः । पं० २४ । १६ ॥

**मयसूनुः** । व्योमासुरः । द्वि० ७ । ३१ ॥

**मरणम्** । प्राणिनां प्राणविमोचनम् । तत्कालीनं दुःखम् । तृ० ३० । १२--१८ ॥ तत्कालीना दुरन्तचिन्ता । च० २८ । १५--२२ ॥ मरणानन्तरीया अवस्था । तृ० ३० । १९--३४ ॥ मरणसूचकारिष्टानि । द० ४२ । २७--३१ ॥

**१ मरीचिः** । ब्रह्मणो मानसः पुत्रः । तृ० १२ । २२–२४ ॥ भार्या कर्दमप्रजापतिपुत्री कला । पुत्रौ कश्यप पूर्णिमा च । च० १ । १३ ॥

**२ मरीचिः** । १ भरतवंश्यस्य सम्राजः पुत्रः । भार्या १ बिन्दुमती । तत्पुत्रो बिन्दुमान् । पं० १५ । १५ ॥

**मरीचिगर्भाः** । नवममन्वन्तरीया देवाः । अ० १३ । १९ ॥

**१ मरुः** । क्ष० सू० वं० । शीघ्रस्य पुत्रः । तत्पुत्रः श्रुतः । तेन कलापग्रामे स्थित्वा नष्टस्य सूर्यवंशस्य कलियुगान्ते पुनरुद्भावनम् । न० १२ । ५–७ ॥ द्वा० २१ । ३७ ॥

**२ मरुः** । क्ष० सू० वं० । हर्यश्वस्य पुत्रः । तत्पुत्रः । प्रतीपकः । न० १३ । १५--१६ ॥

**१ मरुतः** । दितेः पुत्राः । एकोनपञ्चाशत् । ते देवत्वं प्राप्ताः । प० १८ । २३--७८ ॥

**२ मरुतः** । क्ष० सो० वं० । करंधमस्य पुत्रः । अनपत्यस्य तस्य दुष्यन्तः पुत्रत्वमाप । न० २३ । १७ ॥

**मरुत्तः** । क्ष० सू० वं० । अवीक्षितः पुत्रः । संवर्तेन तस्य याजनम् । न० २ । २६ ॥

**मरुत्वती** । दक्षप्रजापतेः पुत्री । धर्मप्रजापतेर्भार्या । तत्पुत्रौ मरुत्वान् २ जयन्तश्च । प० ६ । ८ ॥

**मरुत्वान्** । धर्मप्रजापतेः पुत्रः । तन्माता मरुत्वती । प० ६ । ८ ॥

**मरुदेवः** । क्ष० सू० वं० । न० १२ । १२ ॥

**मरुद्वृधा** । नदी । पं० १९ । १८ ॥

**मरुधन्वः** । देशः । प्र० १० । ३५ ॥

**१ मलयः** । ऋषभदेवस्य पुत्रः । पं० ४ । १० ॥

**२ मलयः** । पर्वतः । पं० १९ । १६ ॥ द० ७९ । १६ ॥

**मण्णारः** । तीर्थम् । न० २० । २८ ॥

**महः** । चतुर्थ ऊर्ध्वलोकः । द्वि० १ । २८ ॥ तदुत्पत्तिः । द्वि० ५ । ३८ ॥ तृ० ११ । २९ ॥

**महत्तत्त्वम्** । भूतादिशब्दं पश्यत ॥

**महस्वान्** । क्ष० सू० वं० । अमर्षणस्य पुत्रः । तत्पुत्रः विश्वसाह्वः । न० १२ । ७ ॥

**महातलम्** । पञ्चम अधोलोकः । पं० २४ । ७ । २९ ॥ तदुत्पत्तिः । द्वि० १ । २६ । द्वि० ५ । ४१ ॥

**महाधृतिः** । क्ष० सू० वं० । विस्तृतस्य पुत्रः । तत्पुत्रः । कृतिरातः । न० १३ । १६--१७ ॥

**१ महान्** । **महान्तः** । तत्सेवा । स० ५ । ३२ ॥ तदतिक्रमे दोषः । द० ४ । ४६ ॥

**२ महान्** । एकादशरुद्रेष्वन्यतमः । ष० ६ । १७ ॥

**३ महान्** । भूतादिशब्दं पश्यत ॥

**महानदी** । नदी । पं० १९ । १८ ॥

**महानन्दिः** । द्वितीयस्य नन्दिवर्धनस्य पुत्रो मगधराजः । द्वा० १ । ७ ॥

**महानसः** । शाकद्वीपस्थः पर्वतः । पं० २० । २६ ॥

**महापुरुषलक्षणम्** । द्वा० ११ ॥ १--२६ ॥

**महानाभः** । हिरण्याक्षस्य पुत्रः । स० २ । १८ ॥

**महापौरुषिकः** । प्र० १४ । ३६ ॥ द्वि० १ । १० ॥

**महाबलिः** । विरोचनस्य पुत्रः । १ बलिशब्दं पश्यत ॥

**महाभारतम्** । श्रीव्यासेन निर्मित इतिहासः । प्र० ४ । २५ ॥ तत्स्तुतिः । ५ । ३ ॥

**महाभूतानि** । पञ्चमहाभूतशब्दं पश्यत ॥

**महाभोजः** । क्ष० सो० वं० । सात्वतस्य पुत्रः । न० २४ । ९ ॥ तत्पुत्राः भोजाः । ११ ॥

**महामनाः** । क्ष० सो० वं० । महाशीलस्य पुत्रः । तत्पुत्रौ उशीनरः तितिक्षुश्च । न० २३ । २ ॥

**महामोहः** । अविद्यावृत्तिः । तृ० १२ । २ ॥ २० । १८ ॥

**महारोमा** । क्ष० सू० वं० । कृतिरातस्य पुत्रः । तत्पुत्रः स्वर्णरोमा । न० १३ । १७ ॥

**महारौरवः** । नरकः । पं० २६ । ७ । १२ ॥

**महालक्ष्मीः** । श्रीशब्दं पश्यत ॥

**महावशी** । क्ष० सू० वं० । कृतेः पुत्रः । न० १३ । २६ ॥

**महावीरः** । प्रियव्रतस्य पुत्रः । ऊर्ध्वरेताः । पं० १ । २५--२६ ॥

**१ महावीर्यः** । क्ष० सू० वं० । १ बृहद्रथस्य पुत्रः । तत्पुत्रः सुधृतिः । न० १३ । १५ ॥

**२ महावीर्यः** । क्ष० सो० वं० । मन्योः पुत्रः । न० २१ । १ ॥ तत्पुत्रो दुरितक्षयः । १९ ॥

**महाशः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता मित्रविन्दा । द० ६१ । १६ ॥

**महाशक्तिः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता (माद्री) लक्ष्मणा । द० ६१ । १५ ॥

**महाशीलः** । क्ष० सो० वं० । जनमेजयस्य पुत्रः । तत्पुत्रो महामनाः । न० २३ । २ ॥

**महाहयः** । क्ष० सो० वं० । यदुपुत्रस्य सहस्रजितः पुत्रः । न० २३ । २१ ॥

**१ महिमा** । भगनामकादित्यस्य पुत्रः । तन्माता सिद्धिः । ष० १८ । २ ॥

२ **महिमा** । सिद्धिः । **ए० १५** । ११ ॥

**महिषः** । असुरः । अनुह्लादस्य पुत्रः । तन्माता सूर्म्या **ष० १८** । १६ ॥

**महिष्मान्** । क्ष० सो० वं० । सोहञ्जेः पुत्रः । तत्पुत्रो भद्रसेनकः । **न० २३** । २२ ॥

**महीतलम्** । प्रथम ऊर्ध्वलोकः । **द्वि० १** । २७ ॥ अस्य भूलोक इति नामान्तरम् ५ । ३८ ॥

**महेन्द्रः** । पर्वतः । **पं० १९** । १६ ॥ **द० ७९** । १२ ॥

**मागधः** । जरासन्धशब्दं पश्यत ॥

**मागधवंशे भविष्यतां नामानि** । **न० २२** । ४५ ॥

**माघमासः** । तपोमासः । **द्वा० ११** । ३९ ॥

**माङ्गलिः** । सामग ऋषिः । पौष्यञ्जेः शिष्यः । **द्वा० ६** । ७९ ॥

**माण्डव्यः** । ऋषिः । तेन यमाय शापदानम् । **तृ० ५** । २० ॥

**माण्डूकेयः** । बह्वृच ऋषिः । इन्द्रप्रमितेः शिष्यः । तच्छिष्यो देवमित्रः । **द्वा० ६** । ५५-५६ ॥ तस्य पुत्रः शाकल्यः । ५७ ॥

**मातलिः** । इन्द्रस्य सारथिः । **अ० ११** । २२ ॥ तेन रामाय ऐन्द्ररथयापनम् । **न० १०** । २१ ॥

**मातृका** । अर्यम्णः पत्नी । तत्पुत्राः । चर्षणयः । **ष० ६** । ४२ ॥

**मानसम्** । सरः । **तृ० २३** । ४० ॥

१ **माद्री** । श्रीकृष्णस्य भार्या । तस्याः लक्ष्मणा इति नामान्तरम् । तत्पुत्राः । **द० ६१** । १५ ॥

२ **माद्री** । पाण्डोर्भार्या । पुत्रौ नकुलः सहदेवश्च । **न० २२** । २८ ॥

**माधवः** । वैशाखमासः ॥

**मानसोत्तरः** । पुष्करद्वीपस्थः पर्वतः । **पं० २०** । ३० ॥

**मानः** । गुणः । **प्र० १६** । २९ ॥

**मान्धाता** । क्ष० सू० वं० । युवनाश्वस्य पुत्रः । तस्य त्रसदस्युरिति नामान्तरम् । **न० ६** । २५--३३ ॥ तद्भार्या शशबिन्दोः पुत्री बिन्दुमती । तत्पुत्राः पुरुकुत्सः २ अम्बरीषः मुचुकुन्दश्च । तत्पुत्र्यः पञ्चाशत् सौभरेर्भार्याः । ३८--४५ ॥ **द्वि० ७** । ४४ ॥

**माया** । अधर्मस्य पुत्री । तन्माता मृषा । दम्भस्य भार्या । पुत्रौ लोभो निकृतिश्च । **च० ८** २-३ ॥

**माया** । कपटम् । **प्र० १७** । ३२ ॥

**मायावती** । कामस्य पत्नी रतिः । तस्याः शम्बरासुर-गृहे वासः । प्रद्युम्नेन शम्बरं हत्वा तस्याः प्राप्तिश्च । **द० ५५** । ६--१३ ॥

१ **मारिषा** । वार्क्षीशब्दं पश्यत । **च० ३०** । ४८ ॥

२ **मारिषा** । २ शूरस्य भार्या । वसुदेवादीनां माता । **न० २४** । २७ ॥

**मारीचः** । राक्षसः । रामेण हतः । **न० १०** । १० ॥

**मार्कण्डेयः** । धातुः पुत्रस्य मृकण्डस्य पुत्रः । **च० १** । ४५ ॥ तस्य तपश्चरणादिकथा । **द्वा० ८-१०** ॥ तदनुग्रहाय नरनारायणयोराविर्भावः । **द्वा० ८** । ३२ ॥ तत्कृतं भगवत्स्तोत्रम् । ४१-४९ ॥ तेन प्रलयदर्शनम् । ९ । ८-३४ ॥ तस्मै रुद्रेण वरदानम् । **१०** ॥

**मार्गः** । पन्था इत्यत्र पश्यत ॥

**मार्गशीर्षमासः** । सहोमासः द्वा० ११ । ४१ ॥

**मार्जारिः** । क्ष० सो० वं० । ५ सहदेवस्य पुत्रः । तत्पुत्रः १ श्रुतश्रवाः । न० २२ । ४६ ॥

**मार्ताण्डः** । सूर्यः । तन्नामनिर्वचनम् । पं० २० । ४४ ॥

**मार्दवम्** । गुणः । प्र० १६ । २८ ॥

**माली** । असुरः । अ० १० । ५७ ॥

**मालाकारः** । सुदामन्‌शब्दं पश्यत ॥

१ **माल्यवान्** । इलावृतखण्डस्य पश्चिमतो विद्यमानः पर्वतः । पं० १६ । १० ॥

२ **माल्यवान्** । असुरः । अ० १० । ५७ ॥

**मासानां दिनमानम्** । पं० २१ । ३–६ ॥

**माहेश्वरज्वरः** । तस्य वैष्णवज्वरेण सह युद्धे पराजयः । तत्कृतं भगवत्स्तोत्रं च । द० ६३ । २३--२८ ॥

**मितध्वजः** । क्ष० सू० वं० । धर्मध्वजस्य पुत्रः । तत्पुत्रः खाण्डिक्यः । न० १३ । २० ॥

१ **मित्रः** । वसिष्ठस्य पुत्रः ऋषिः । तन्माताऽरुन्धती (ऊर्जा) च० १ । ४१ ॥

२ **मित्रः** । द्वादशादित्येष्वन्यतमः कश्यपस्य पुत्रः । तन्माता अदितिः । ष० ६ । ३९ ॥ तद्भार्या रेवती । तत्पुत्राः उत्सर्गः अरिष्टः पिप्पलश्च । १८ । ६ ॥ तस्य वरुणस्य च साधारणौ पुत्रौ अगस्त्यो वसिष्ठश्च । ५--६ ॥

१ **मित्रविन्दा** । कुशद्वीपस्था नदी । पं० २० । १५ ॥

२ **मित्रविन्दा** । आवन्त्यस्य जयसेनस्य पुत्री । तन्माता वसुदेवस्य भगिनी राजाधिदेवी । श्रीकृष्णस्य महिषी । द० ५८ । ३०--३१ ॥ ८३ । १५--१६ ॥ तत्पुत्राः । ६१ । १६ ॥

**मित्रसहः** । सौदासस्य नामान्तरम् । न० ९ । १८ ॥

**मित्रा** । मैत्रेयस्य माता । तृ० ४ । ३६ ॥

**मित्रायुः** । ( **मित्रेयुः** ) क्ष० सो० वं० । २ दिवोदासस्य पुत्रः । तत्पुत्रः च्यवनः सुदासः ३ सहदेवः सोमकश्च । न० । २२ । १ ॥

**मित्रावरुणौ** । देवौ । उर्वशीदर्शनक्षुभितात् कुंभे पतितात् तत्तेजसो जातौ पुत्रौ २ अगस्त्यो ३ वसिष्ठश्च । ष० १८ । ५ ॥

**मिथिलः** । मिथिलाया निर्माता राजा । जनकशब्दं पश्यत तन्नामनिर्वचनम् । न० १३ । १३ ॥

**मिथिला** । मिथिलेन निर्मिता नगरी । न० १३ । १३ ॥

**मिश्रकेशी** । अप्सराः । तस्यां वसुदेवभ्रातुर्वत्सकात वृकादीनां पुत्राणामुत्पत्तिः । न० २४ । ४३ ॥

**मीढुषः** । इन्द्रस्य पुत्रः । तन्माता पौलोमी । ष० १८ । ७ ॥

**मीढ्वान** । क्ष० सू० वं० । दक्षस्य (दृक्षस्य) पुत्रः । तत्पुत्रः इन्द्रसेनः । न० २ । १९ ॥

**मीनात् शिक्षिता गुणाः** । ए० ८ । १९-२१ ॥

**मुकुन्दः** । शाल्मलिद्वीपस्थं वर्षम । पं० २० । १० ॥

**मुक्तिः** । पुराणलक्षणम् । जीवस्य अन्यथारूपं हित्वा-स्वरूपेण स्थितिः । द्वि० १० । १ । ६ ॥

**मुचुकुन्दः** । क्ष० सू० वं० । मान्धातुः पुत्रः । तद्भ्रातरौ पुरुकुत्सोऽम्बरीषश्च । न० ६ । ३८ ॥ तस्य कालयवनवधादिकथा । द० ५१ । १४-२३ ॥ तत्कृता श्रीकृष्णस्तुतिः । ४६ ५८ ॥

तेन बदर्याश्रममेत्य तत्र तपश्चरणम्। ५२। ४॥ द्वि० ७। ४४॥

**मुञ्जाटवी**। गवां तत्र गमनं श्रीकृष्णेन तासां सङ्कटान्मोचनं च। द० १९। १-६॥

**मुत्**। धर्मप्रजापतेः पुत्री। तन्माता तुष्टिः। च० १। ५१॥

१ **मुद्गलः**। क्ष० सो० वं०। पूरुवंशस्य भर्म्याश्वराजस्य पुत्रः। सनतो ब्राह्मणोऽभवत्। तत्पुत्रौ दिवोदासः अहल्या च। न० २१। ३१-३४॥

२ **मुद्गलः**। बह्वृच ऋषिः। शाकल्यस्य शिष्यः द्वा० ६। ५७॥ अयं पूर्वोक्त एव वेति संदेहः॥

**मुनिः**। दक्षप्रजापतिपुत्री। कश्यपभार्या। तत्पुत्र्य अप्सरसां गणाः। ष० ६। २६-२७॥

**मुरः**। पञ्चशिराः असुरः। नरकासुरस्य सखा। श्रीकृष्णेन हतः। द० ५९। ६-११॥ तृ० ३। ११॥

**मुष्टिकः**। कंसभृत्यो मल्लः। तद्वधो बलरामेण। द० ४४। २४-२५॥

**मुसलस्य उत्पत्तिः**। साम्बस्योदरात् ए०। १। १७॥

**मुहूर्तः**। कालविशेषः तृ० ११। ८॥

**मुहूर्ता**। दक्षप्रजापतिपुत्री। धर्मस्य पत्नी। तत्पुत्रा मौहूर्तिका देवगणाः। ष० ६। ९॥

**मूर्खः**। देहादिषु अहंबुद्धिः। ए० १९। ४२॥

**मूर्तयः**। क्ष० सो० वं०। कुशस्य पुत्रः। न० १५। ४॥

१ **मूर्तिः**। दक्षप्रजापतिपुत्री। धर्मप्रजापतिभार्या। तत्पुत्रौ नरनारायणौ। च० १। ५२॥

२ **मूर्तिः**। दशममन्वन्तरीय ऋषिः। अ० १३। २२

**मूलकः**। क्ष० सू० वं०। अश्मकस्य पुत्रः। तस्य नारीकवच इति नामान्तरम्। तत्पुत्रो १ दशरथः। न० ९। ४०॥

**मृकण्डः**। धातुः पुत्रः। तन्माता आयतिः। तत्पुत्रो मार्कण्डेयः। च० १। ४४॥

**मृगया**। आखेटः। परीक्षितः। प्र० १८। २४॥ पुरंजनस्य। च० २६। ४॥ उत्तमस्य। च० १०। ३॥

१ **मृत्युः**। अधर्मस्य नामान्तरम्। तृ० १२। २५॥ तत्पुत्री अङ्गराजस्य भार्या सुनीथा। च० १३। ३९॥

२ **मृत्युः**। कलेः पुत्री। भयस्य भार्या। तत्पुत्रौ यातना निरयश्च। च० ८। ४॥

३ **मृत्युः**। यमः। प्र० १६। ८॥ सः जन्मवतां देहेन सहैव वर्तते। द० १। ३८॥ सः बुद्धिमताऽपोह्यः। ४८॥

**मृदुरः**। क्ष० सो० वं०। श्वफल्कस्य पुत्रः। न० २४। १६॥

**मृदुविन्**। क्ष० सो० वं०। श्वफल्कस्य पुत्रः। न० २४। १६॥

**मृषा**। अधर्मस्य भार्या। तत्पुत्रौ दम्भः माया च। अप्रजो निर्ऋतिः तौ स्वीकृतवान्। तौ दम्पती चाभवताम्। च० ८। २-४॥

**मेघः**। अंबुवाहः। तस्य भगवदंगादुत्पत्तिः। द्वि० १ ३४॥

**मेघपृष्ठः**। क्रौञ्चद्वीपस्थं वर्षम्। पं० २०। २१॥

**मेघमालः** । प्लक्षद्वीपस्थं वर्षम् । **पं०** २० । ४ ॥

**मेघस्वातिः** । आन्ध्रराजः । **द्वा०** १ । २४ ॥

**मेढ्रम्** । शिश्नशब्दं पश्यत ॥

**मेधा** । दक्षप्रजापतिपुत्री । धर्मप्रजापतेर्भार्या । तत्पुत्री स्मृतिः । **च०** १ । ५२ ॥

**१ मेधातिथिः** । प्रियव्रतस्य पुत्रः । **पं०** १ । २५ ॥

**२ मेधातिथिः** । ऋषिः । कण्वऋषेः पुत्रः । तत्पुत्राः प्रस्कण्वाद्याः । **न०** २० । ६–७ ॥

**मेनका** । अप्सराः । ज्येष्ठमासनेत्री । **द्वा०** ११ । ३५ ॥ तत्पुत्री शकुन्तला विश्वामित्राज्जाता । **न०** २० । १३ ॥

**मेना** । हिमवतो भार्या । तत्पुत्री पार्वती । **च०** ७ । ५८–६५ ॥

**मेरुः** । पर्वतः । **पं०** १६ । ७–२६ ॥ तत्पुत्र्यौ आयतिः नियतिश्च धातृविधात्रोर्भार्ये । **च०** १ । ४४ ॥ तस्यान्याः पुत्र्यः । मेरुदेवी प्रतिरूपा उग्रदंष्ट्री लता रम्या श्यामा नारी भद्रा देववीतिः इति नव आग्नीध्रपुत्राणां भार्याः । **पं०** २ । १९-२३ ॥

**मेरुदेवी** । मेरोः पुत्री । नाभेर्भार्या । तत्पुत्रो भगवानृषभः । **प्र०** ३ । १३ ॥ तस्याः सुदेविः इतिनामान्तरम् । **द्वि०** ७ । १० ॥ **पं०** ३ । १ ॥

**मेरुमन्दरः** । मेरोरवष्टम्भपर्वतः । **पं०** १६ । ११–१२ ॥

**मेषः** । द्वादशराशिष्वन्यतमः । **पं०** । २१ । ४ ॥

**मैत्रावरुणेष्टिः** । श्राद्धदेवकृता । **न०** १ । १३ ॥

**मैत्री** । दक्षप्रजापतिकन्या । धर्मप्रजापतेर्भार्या । तत्पुत्रः प्रसादः । **च०** १ । ५० ॥

**मैत्रेयः** । ऋषिः । तस्य विदुरेण संवादः । **प्र०** १३ । १–२ ॥ **तृ०** **पञ्चमाध्यायमारभ्याऽऽचतुर्थस्कन्ध समाप्ति** ॥

**मैनाकः** । पर्वतः । हिमवतः पुत्रः । **पं०** १९ । १६ ॥

**मोक्षः** । मुक्तिः । **द्वि०** १० । ६ ॥ तद्दाता विष्णुः । **द०** ५१ । २० ॥ **द्वि०** ३ । १० ॥

**मोदोषः** । अथर्वविद्दषिः । वेददर्शस्य शिष्यः । **द्वा०** ७ । २ ॥

**मोहः** । अविद्यावृत्तिः । **तृ०** १२ । २ ॥ २० । १८ ॥

**मोहिन्यवतारः** । **प्र०** ३ । १७ ॥ तद्रूपवर्णनम् । **अ०** ८ । ४१–४५ ॥ ९ । १७–१८ ॥ तद्रूपदर्शनेन रुद्रस्य मोहाधिगमः । १२ ॥

**मौर्याः** । राजानः । **द्वा०** १ । १२ ॥

**मौसलकथा** । **तृ०** ४ । १–२ ॥ **ए०** ३० । १४ २५ ॥

**मौहूर्तिकाः** । धर्मप्रजापतेः पुत्राः । तन्माता मुहूर्ता । **ष०** ६ । ९ ॥

## य०

**यजुः** । यजुर्वेदः । **प्र०** ४ । २० ॥ तद्धर्ता वैशम्पायनः । **प्र०** ४ । २१ । तस्य निगद इति नामान्तरम् । **द्वा०** ६ । ५२ ॥ तस्य शाखा । ६१ -६५ ॥

**१ यज्ञः** । यागः । तस्य ब्रह्मण उत्पत्तिः । तत्प्रभेदाश्च । **तृ०** १२ । ३४ । ४० ॥ **ए०** १९ । ३९ ॥ तस्याप्राशस्त्यम् । **च०** २५ । ७–॥ यज्ञकरणं ब्रह्मणा । **द्वि०** ६ । २२–२८ ॥ तन्नामानि । **तृ०** १२ । ४० ॥

२ **यज्ञः** । विष्णुः । **द्वि० ३ । ७** ॥

३ **यज्ञः** । रुचिप्रजापतेः पुत्रः । तन्माता आकूतिः स विष्णोरवतारः सः पुत्रिकापुत्रकधर्मेण मातामहस्य स्वायंभुवमनोः पुत्रो बभूव । तस्य भार्या तस्यैव स्वसा महालक्ष्म्यंशभूता दक्षिणा । तत्पुत्राः तुषिताः । **च० १** । ३-८ ॥ **प्र० ३** । १२ ॥ **द्वि० ७** । २ ॥ तेन देवेन्द्रो भूत्वा त्रिविष्टपरक्षणम् । स्वायंभुवमनोः राक्षसेभ्यो रक्षणं च । **अ० १** । १८ ॥

**यज्ञबाहुः** । [यज्वबाहुः] प्रियव्रतस्य पुत्रः । शाल्मलिद्वीपाधिपः । **पं० १** । २५-३३ ॥ तन्माता बर्हिष्मती । २४--२५ ॥

**यज्ञपुरुषः** । **प्र०** ५ । ३८ ॥ **द्वि० ७** । ११ ॥

**यज्ञवराहः** । वराहशब्दं पश्यत । तत्स्तुतिः । **पं० १८** । ३५-३९ ॥ तन्मन्त्रः । ३५ ॥

**यज्ञहोत्रः** । उत्तममनोः पुत्रः । **अ० १** । २३ ॥

**यज्वबाहुः** । यज्ञबाहुशब्दं पश्यत ॥

१ **यतिः** । ब्रह्मपुत्रः ऊर्ध्वरेताः । **च० ८** । १ ॥

२ **यतिः** । क्ष० सो० वं० । नहुषस्य पुत्रः ययातेर्ज्येष्ठो भ्राता । तेन पितृदत्तराज्यानभ्युपगमः । **न० १८** । २ ॥

३ **यतिः** । संन्यासिशब्दं पश्यत । तद्धर्माः । **ए० १८** । १२-३७ ॥ **स० १३** । १-१० ॥

**यथासंकल्पसिद्धिः** । सिद्धिः । **ए० १५** । २६ ॥

**यदुः** । क्ष० सो० वं० । ययातेः पुत्रः । तन्माता देवयानी । **न० १८** । ३३ ॥ तत्पुत्राः सहस्रजित् क्रोष्टा नलः रिपुः इति चत्वारः । **न० २३** । २० ॥ तस्य अवधूतेन संवादः । **ए० ७** । २४-९ ॥

**यदुकुमाराणां शापः** । **ए० १** । ११-२४ ॥

**यदुवंशक्षयः** । **प्र० १५** । २२-२६ ॥ **ए० १** ॥

१ **यमः** । विवस्वतः पुत्रः । तन्माता संज्ञा । **ष० ६**-४० ॥ तस्य माण्डव्यशापात् शूद्रायां व्यासात् विदुरत्वेन जननम् । **तृ० ५** । २० ॥ तेन स्वदूतान्प्रति भगवन्माहात्म्यकथनम् । **ष० ३** । १२-३३ ॥ तस्य बालकरूपग्रहणेन प्रेतबन्धुभिस्सह संवादः । तेन तान्प्रति तत्वोपदेशश्च । **स० २** । २७--॥

२ **यमः** । योगाङ्गभूतः कर्मविशेषः । तत्स्वरूपकथनम् । ३३--३५ ॥

**यममार्गः** । पापिनाम् । **तृ० ३०** । २०-२४ ॥

**यमदूताः** । तेषां विष्णुदूतैस्सह संवादः । **ष० १** । ३२--॥ तान्प्रति यमेन भगवन्माहात्म्यकथनम् । **३** । ४ ॥ तैः पापिनां यमलोकप्रापणम् । **तृ० ३०** । १९--॥

**यमलार्जुनभङ्गः** । श्रीकृष्णेन । **द्वि० ७** । २७ ॥ **द० १०** । २३--२७ ॥

**यमी** । विवस्वतः पुत्री यमुना । **ष० ६** । ४० ॥

**यमुना** । नदी । ३ । २ । २७ ॥ पं० १९ । १८ ॥ तस्या बलरामेण विहारार्थमाह्वानम् । **द० ६५** । २३-२८ ॥

**यमौ** । नकुलसहदेवौ । **प्र० १०** । ९ ॥

**ययातिः** । क्ष० सो० वं० । नहुषस्य पुत्रः । तस्य राज्यप्राप्तिः । **न० १८** । ३ ॥ तेन कूपे पतितायाः शुक्राचार्यपुत्र्या देवयान्या उद्धरणम् ।

**न० १८ । १९ ॥** तस्य देवयानीशर्मिष्ठाभ्यां विवाहः । ३० ॥ तस्य देवयान्यां यदु-तुर्वसुनामक पुत्रद्वयोत्पत्तिः । तस्य शर्मिष्ठायां द्रुह्यु-अनु-पूरु-नामकपुत्रत्रयोत्पत्तिः । ३३ ॥ तस्य शुक्राचार्यशापात् जराप्राप्तिः । पूरुणा तत्प्रतिग्रहश्च । **न० १८ ।** ३६–४५ ॥ तस्य वैराग्यप्राप्तिः । तेन देवयानीं प्रति बस्तकथाकथनं च **न० १९ ॥**

**यवनः** । कालयवनः । तस्य श्रीकृष्णेन योद्धुमागमनम् । **द० ५० । ४४ ॥** तस्य मुचुकुन्देन भस्मीकरणम् **५१ । १२ ॥**

**यवसम्** । प्लक्षद्वीपस्थं वर्षम् । **पं० २० । ३ ॥**

**यवीनरः** । क्ष० सो० वं० । पूरुवंश्यस्य द्विमीढस्य पुत्रः । तत्पुत्रः कृतिमान् । **न० २१ । २७ ॥**

**यशोदा** । ४ नन्दस्य पत्नी । गोपी । तस्याः पूर्वजन्मनि द्रोणनामकवसुभार्याभूतधरानामकत्वम् । **द० ८ ।** ४८ ॥ तस्यां योगमायाया उत्पत्तिः । तस्याः शयने वसुदेवेन श्रीकृष्णस्य स्थापनम् । **द० ३ ।** ५१ ॥ तया दधिनिर्मथनम् । ९ । ३ ॥ तया श्रीकृष्णस्य उलूखले दामभिर्बन्धनम् । १४–२० ॥ तस्यै श्रीकृष्णेन विश्वरूपप्रदर्शनम् । **७ ।** ३६ ॥ **८ ।** ३२ ॥

**यशोनन्दिः** । राजा । **द्वा० १ ।** ३३ ॥

**यागः** । यज्ञशब्दे पश्यत ॥

**१ याज्ञवल्क्यः** । ऋ० । **प० १५ ।** १३ ॥ ज्ञानिपु परिगणितोऽयं प्रायः तृतीयो वैशंपायनशिष्य एव भवेत् ॥

**२ याज्ञवल्क्यः** । कौसल्योऽयं जैमिनिशिष्यस्य हिरण्यनाभस्य शिष्यः । **न० १२ ।** ४ ॥

**३ याज्ञवल्क्यः** । यजुर्वेदाध्यायी वैशम्पायनस्य शिष्यः । देवरातस्य पुत्रः । **द्वा० ६ ।** ६२-६४ ॥ तेन वैशम्पायनात् अधीतस्य यजुर्वेदस्य छर्दनं वाजिरूप धरात् सूर्यात् वाजसनीयनामकयजुश्शाखाध्ययनं च **द्वा० ६ ।** ७३ ७४ ॥ तत्कृता सूर्यस्तुतिः । **द्वा० ६ ।** ६७–७२ ॥

**४ याज्ञवल्क्यः** । ऋग्वेदाध्यायी । **द्वा० ६ ।** ५४ ॥

**यातना** । निरयस्य भार्या । **च० ८ ।** ४ ॥

**यादवाः** । यदुवंश्याः कुमाराः । तेषां ऋषिभिः शापदानम् । **तृ० ३ ।** २४ ॥ **ए० १ ।** १२–१७ ॥ तेषां परस्परघातेन मरणम् । **३० ॥**

**यादांसि** । तिमेः पुत्राः । **प० ६ ।** २६ ॥

**यामाः** । स्वायंभुवमन्वन्तरीया देवाः । **प्र० ३ ।** १२ ॥

**यामिनी** । दक्षपुत्री तार्क्ष्यस्य भार्या । तत्पुत्राः । शलभाः । **प० ६ ।** २१ ॥

**युगन्धरः** । क्ष० सो० वं० । कुणेः पुत्रः । **न० २४ ।** १४ ॥

**युगम्** । चत्वारि । तद्वर्णनम् । **तृ० ११ ।** १८ २२ ॥

**युग्मश्लोकगीतम्** ॥ गोपीभिः । **द० ३५ ।** २–२५ ॥

**युधाजित्** । क्ष० सो० वं० । सुमित्रस्य पुत्रः । तत्पुत्रः २ शिनिः । **न० २४ ।** १२ ॥

**युधिष्ठिरः** । क्ष० सो० वं० । पाण्डोः पुत्रः । माता कुन्ती । तेनाश्वमेधत्रयकरणम् । **प्र० ८ ।** ६ ॥ तेन धृतराष्ट्रगान्धार्योः समाश्वासनम् । **प्र० ९ ।** ४८ ॥ तस्य स्वकृतयुद्धस्याधर्मत्वबुद्धिः । **८ ।** ४६–५२ ॥ राज्यपालनम् । **१० ।** ३–६ । **१२ ।** ४ । दुर्निमित्तदर्शनम् । **१४ ।** २ ॥

तेन विच्छायमुखमर्जुनं दृष्ट्वा तत्कारणप्रश्नः । ३९--४४ ॥ तस्य महाप्रस्थानगमनम् । **प्र० १५** । ४४ ॥ तेन नारदं प्रति भगवद्द्वेषिणः शिशुपालस्य भगवत्सायुज्यप्राप्तिः कथमिति प्रश्नः । **स० १** । १५--२० ॥ तस्मै नारदेन नानाविधधर्मकथनम् । **११-१५** ॥ तस्य भार्या द्रौपदी । तत्पुत्रः प्रतिविन्ध्यः । **न० २२** । २९ ॥ तस्यान्या भार्या पौरवी । तत्पुत्रो देवकः । ३० ॥ तेन श्रीकृष्णस्तुतिः । **द० ७४** । २--५ ॥ **८३** । ३--४ ॥

**युयुत्सुः** । वैश्यापुत्रो धार्तराष्ट्रः । **प्र० १०** । ९ । **१३** । ३ ॥

**युयुधः** । क्ष० सू० वं० । वस्वनन्तस्य पुत्रः । तत्पुत्रः सुभाषणः । **न० १३** । २५ ॥

**युयुधानः** । क्ष० सो० वं० । सत्यकस्य पुत्रः । तस्य सात्यकिरिति प्रसिद्धं नाम । तत्पुत्रः ९ जयः । **न० २४** । १४ ॥ **प्र० ७** । ५० । **तृ० १** । ३१ ॥

**१ युवनाश्वः** । क्ष० सो० वं० । २ चन्द्रस्य पुत्रः । तत्पुत्रः शावस्तः । **न० ६** । २१ ॥

**२ युवनाश्वः** । क्ष० सू० वं० । सेनजितः पुत्रः । तस्य कुक्षिं विनिर्भिद्य उत्पन्नः पुत्रो मान्धाता । **न० ६** । २५--३१ ॥

**१ योगः** । धर्मप्राजपतेः पुत्रः । तन्माता क्रिया । **च० १** । ५१ ॥

**२ योगः** । भगवति मनसः प्रणिधानम् । **प्र० १३** । ५१--५४ ॥ **१५** । ४१--४२ ॥ **१८** । २५--२६ ॥ **द्वि० १** । ६--२१ ॥ **२** । १५--१६, १९-२१ ॥ **तृ० २५** । १३--१९ ॥ **२७** । ६ ॥ **२८** । १--३६ ॥ **च० ४** । २४--२७ ॥ **८** । ४३--४४ ॥ **९** । २ ॥ **१२** । १७--१८ ॥ **२३** । ८, १४--१८ ॥ **२८** । ३८--४२ ॥ **३१** । ३ ॥ **पं० ६** । ६--९ ॥ **प० २** । ४०--४२ ॥ **स० १५** । **३०--३५** ॥ **द० ८७** । ३३ ॥ **ए० ९** । ११--१३ ॥ **१४** । ३२--३७ । ४२--४४ ॥ तस्य लक्षणम् । **तृ० २८** ॥ तस्य त्रैविध्यम् । **ए० २०** । ६--२८ ॥

**योगधारणया देहत्यागप्रकारः** । **च० ४** । २४--२७ ॥ **२३** । १३--१८ ॥

**योगमाया** । दुर्गा । तस्या भगवत आज्ञा । **द० २** । ६ ॥ **तृ० १५** । २६ ॥

**यौवनाश्वः** । मान्धातुः पुत्रोऽम्बरीषः । तत्पितामहेन मान्धातुः पित्रा २ युवनाश्वेन पुत्रत्वेन स्वीकृतत्वात् युवनाश्वस्य पुत्रोऽभूत् । **न० ७** । १ ॥

## र०

**रक्षोगणभोजनः** । नरकः । **पं० २६** । ७, ३१ ॥

**रघुः** । क्ष० सो० वं० । दीर्घबाहोः पुत्रः । तत्पुत्रः पृथुश्रवाः । **न० १०** । १ ॥ **द्वि० ७** । ४४ ॥

**रचना** । त्वष्टुर्भार्या । प्रह्लादस्य पुत्री दैत्यानुजा । तत्पुत्रौ संनिवेशः विश्वरूपश्च । **प० ६** । ४४ ॥

**रजकवधः** । श्रीकृष्णेन । **द० ४१** । ३२-३९ ॥

**रजनी** । शाल्मलिद्वीपस्था नदी । **पं० २०** । १० ॥

**रजिः** । क्ष० सो० वं० । आयोः पुत्रः । **न० १७** । १ ॥ तत्पुत्राः पञ्च शतानि इन्द्रेण अभिचारविधानेन हताः । **न० १७** । १५ ॥

**रणकः** । क्ष० सू० वं० । **न० १२** । १५ ॥

**रणञ्जयः** । क्ष० सू० वं० । **न० १२** । १३ ॥

**१ रतिः** । मन्मथस्य भार्या । तस्याः शम्बरगृहे वासः । तत्र तस्याः मायावती इति नाम । **द० ५५** । ६--७ ॥

**२ रतिः** । विभोर्भार्या । **पं० १५** । ६ ॥

**रथीतरः** । क्ष० सू० वं० । पृषदश्वस्य पुत्रः । तत्पुत्राः आङ्गिरसाः राथीतराश्च । **न० ६** । १--३ ॥

**रन्तिदेवः** । क्ष० सो० वं० । पूरुवंश्यस्य सङ्कृतेः पुत्रः । तस्य कथा । **न० २१** । २--१७ ॥ **प्र० १२** । २४ । **द्वि० ७** । ४४ ॥

**रभसः** । क्ष० सो० वं० । २ रम्भस्य पुत्रः । तत्पुत्रो गम्भीरः । **न० १७** । १० ॥

**रमणकम्** । शाल्मलिद्वीपस्थं वर्षम् । **पं० २०** । ९ ॥

**१ रमणकः** । प्रियव्रतस्य पुत्रः । **पं० २०** । ३१ ॥

**२ रमणकः** । जम्बूद्वीपस्योपद्वीपः । **पं० १९** । ३० ॥ तत्र कालियनागस्य वासः । **द० १७** । १ ॥

**रमा** । महालक्ष्मीः । श्रीशब्दं पश्यत ॥

**रमादेवी** । केतुमालस्थस्य भगवतो भार्या । **पं० १८** । १५--२३ ॥

**१ रम्भः** । क्ष० सू० वं० । विविंशतेः पुत्रः । तत्पुत्रः खनिनेत्रः । **न० २** । २५ ॥

**२ रम्भः** । क्ष० सो० वं० । आयोः पुत्रः । **न० १७** । १ ॥ तत्पुत्रो रभसः । १० ॥

**रम्भा** । अप्सराः । आषाढमासनेत्री । **द्वा० ११** । ३६ ॥

**रम्यकः** । आग्नीध्रपुत्रः । तद्भार्या मेरोः पुत्री रम्या । **पं० २** । १९--२३ ॥

**रम्यकम्** । जम्बूद्वीपस्थं वर्षम् । **पं० १८** । २४--२८ ॥

**रम्या** । मेरोः पुत्री । आग्नीध्रपुत्रस्य रम्यकस्य भार्या । **पं० २** । १९-२३ ॥

**रयः** । क्ष० सो० वं० । पुरूरवसः पुत्रः । तत्पुत्रः एकः । **न० १५** । १--२ ॥

**रसः** । अंभसो गुणः । **द्वि० ६** । १ ॥ **तृ० ६** । १३ ॥ **२६** । ४१--४२ ॥

**रसकुल्या** । कुशद्वीपस्था नदी । **पं० २०** । १५ ॥

**रसना** । जिह्वेन्द्रियम् । तदुत्पत्तिः अभिमानिदेवता च । तृ० ६ । १--१३ ॥ **२६** । ४१ । ४८ ॥

**रसातलम्** । षष्ठ अधोलोकः । उत्पत्तिः । **द्वि० ५** । ४० ॥ **पं० २४** । ७ । ३० ॥ **द्वि० १** । २६ ॥ तत्र हिरण्याक्षगमनम् । **तृ० १८** ॥

**१ राका** । अङ्गिरसः पुत्री । तन्माता श्रद्धा । **च० १** । ३४ ॥ सा आदित्यस्य धातोर्भार्या । तत्पुत्रः प्रातः । **प० १८** । ३ ॥

**२ राका** । शाल्मलिद्वीपस्था नदी । **पं० २०** । १० ॥

**राजकः** । विशाखयूपपुत्रो मगधराजः । **द्वा० १** । ३ ॥

**राजा** । मूर्धाभिषिक्तः क्षत्रियः । तद्धर्माः । **प्र० १७** । १०--११ ; १६,४१ ॥ तन्महिमा । **१८** । ४२-४६ ॥ **तृ० २१** । ५०--५५ ॥ **च० १३** । २३ ॥ **१४** । १५--२० ॥ **१६** । ४--१८ ॥ २० । १३--१४ ॥ **२१** । २१--२३ ॥ **२६** । ६--८ ॥ **पं० ७** । ४ ॥ **प० १४** । १७--२० ॥ **स० ११** । १४ ॥ **न० १५** । ३८, ४१ ॥ **द० ७३** । २१ ॥ **ए० १७** । १७, ४५ ॥ नेन लोकरक्षणाभावे लोकस्य

विपदुत्पत्तिः। प्र० १८। ४२–४५॥ च० १४। ३६–४०॥ तैः कृता भगवत्स्तुतिः। द० ७०। २५–२९॥ ७३। ८–१६॥

**राजसूयः**। क्रतुः। धर्मराजस्य। द० ७४। तन्महिमकथनम्। ७५॥ प्र० ९। ४१। तृ० २। १३–१९॥

**राजाधिदेवी**। शूरस्य पुत्री। वसुदेवस्य भगिनी। न० २४। ३१॥ आवन्त्यस्य जयसेनस्य भार्या। तत्पुत्रौ विन्दानुविन्दौ। ३९॥ तत्पुत्री मित्रविन्दा श्रीकृष्णस्य महिषी। द० ५८। ३१॥

**राज्यवर्धनः**। क्ष० सू० वं०। दमस्य पुत्रः। तत्पुत्रः सुधृतिः। न० २। २९॥

**राधिकः**। क्ष० सू० वं०। २ जयसेनस्य पुत्रः। तत्पुत्रः अयुतः। न० २२। १०॥

**१ रामः**। क्ष० सू० वं०। २ दशरथस्य पुत्रः। विष्णोरवतारभूतः। न० १०। ३॥ तच्चरित्रम्। ४–५६॥ तस्य पट्टाभिषेकानन्तरीयकथा। न० ११॥ तत्पुत्रौ कुशो लवश्च। ११॥ तदवतारकथा। प्र० ३। २२॥ द्वि० ७। २३–२६॥ तन्मन्त्रम्। पं० १९। ३॥ तत्स्तुतिः। ३–८॥

**२ रामः**। परशुरामः। पिता जमदग्निः। माता रेणुका। न० १५। १६॥

**रावणः**। विश्रवसः पुत्रो राक्षसः। तद्भ्राता कुम्भकर्णः। च० १। ३७॥ तयोः पूर्वजन्मनि भगवत्पार्षदत्वं तयोः शापप्राप्तिश्च। स० १। ३५–४४॥ तस्य कार्तवीर्यार्जुनेन बन्धनम्॥ न० १५। २१–२२॥

**राशिः**। (**राशयः**)। मेषादयो द्वादश तेषां मानम्। पं० २१। ३–६॥

**राष्ट्रः**। क्ष० सो० वं०। काशेः पुत्रः। तत्पुत्रो दीर्घतमाः। न० १७। ४॥

**राष्ट्रपालः**। क्ष० सो० वं०। यदुकुलोत्पन्नस्य उग्रसेनस्य पुत्रः। न० २४। २४॥

**राष्ट्रपालिका** (**राष्ट्रपाली**)। उग्रसेनस्य पुत्री। वसुदेवभ्रातुः ३ सृञ्जयस्य भार्या। तत्पुत्राः वृषदुर्मर्षणादयः। न० २४। २५। ४२॥

**राष्ट्रभृत्**। १ भरतस्य पुत्रः। पं० ७। ३॥

**रासक्रीडा**। **रासपञ्चाध्यायी**। श्रीकृष्णस्य। द० ३०–३४॥

**राहुः**। असुरः। विप्रचित्ति पुत्रः। तन्माता सिंहिका। प० ६। ३७॥ तच्छिरश्छेदः। अ० ९। २५॥

**राहुमण्डलम्**। छायाग्रहरूपम्। पं० २४। १–३॥

**रिपुः**। क्ष० सो० वं०। ययातिपुत्रस्य यदोः पुत्रः। न० २३। २०॥

**१ रिपुञ्जयः**। क्ष० सो० वं०। पूरुवंश्यस्य सुवीरस्य पुत्रः। तत्पुत्रो बहुरथः। न० २१। २९॥

**२ रिपुञ्जयः**। क्ष० सो० वं०। विश्वजितः पुत्रः। न० २२। ४९॥

**रुचनः**। क्ष० सो० वं०। रुचकस्य पुत्रः। न० २३। ३५॥

**रुक्मवती**। रुक्मिणः पुत्री। रुक्मिण्याः स्नुषा। प्रद्युम्नस्य भार्या। तत्पुत्रोऽनिरुद्धः। द० ६१। १८–१९॥

**रुक्मिणी**। महालक्ष्म्यवतारभूता श्रीकृष्णस्य पट्टमहिषी विदर्भदेशाधिपतेः भीष्मकस्य पुत्री। तद्विवाहकथारम्भः। द० ५२। २१–॥ तया श्रीकृष्णं

प्रति पत्रिकाप्रेषणम् । ३७–३४ ॥ तस्याः भगवत्याः देवालयगमनम् । ५३ । ४० ॥ तस्याः हरणं श्रीकृष्णेन । ५५ ॥ तस्या विवाहः । ५४ । ५४ ॥ ८३ । ८ ॥ तया सह श्रीकृष्णस्य प्रेमकलहः । ६० ॥ तत्पुत्राः । ६१ । ८-९ ॥ तत्पुत्री चारुमती कृतवर्मसुतस्य ३ बलेर्भार्या । २४ ॥

**रुक्मी** । विदर्भदेशाधिपतेर्भीष्मकस्य पुत्रः । रुक्मिण्या भ्राता । श्रीकृष्णेन तस्य विरूपकरणम् । ५४ ॥ तस्य प्रतिज्ञानुसारेण कुण्डिनमप्रविश्यैव भोजकटे वासः । ५२ ॥ तत्पुत्री रुक्मवती रुक्मिण्याः स्नुषा । प्रद्युम्नस्य भार्या । ६१ । १९ ॥ तस्य वधो रुक्मवतीप्रद्युम्नयोर्विवाहसमये बलरामेण । ३६ ॥

**रुक्मेषुः** । क्ष० सो० वं० । रुचकस्य पुत्रः । न० २३ । ३५ ॥

**१ रुचकः** । मेरोः केसरपर्वतः । पं० १६ । २६ ॥

**२ रुचकः** । क्ष० सो० वं० । पृथुश्रवसः पुत्रः । तत्पुत्राः पुरुजित् रुक्मः रुक्मेषुः पृथुः ज्यामघः इति पञ्च । न० २३ । ३५ ॥

**रुचिः** । ब्रह्मणो मानसः पुत्रः । तद्भार्या स्वायंभुवमनुपुत्री आकूतिः । तत्पुत्रो यज्ञनामा भगवान् । पुत्री यज्ञस्य भार्या महालक्ष्म्यंशभूता दक्षिणा । च० १--४ ॥ प्र० ३ । १२ ॥ द्वि० ७ । २ ॥

**रुचिराश्वः** । क्ष० सो० वं० । सेनजितः पुत्रः । तत्पुत्रः पारः । न० २१ । २३ ॥

**रुद्रः** । महादेवः । तस्योत्पत्तिः तस्य एकादश नामानि च । तृ० १२ । ६--१५ ॥ तद्रूपवर्णनम् । १४ । २३--२८ ॥ च० ५ । १० ॥ ६ । ३३–३९ ॥ तद्भार्या १ दक्षपुत्री सती । १ । ६५ ॥ १ दक्षेण तस्यावमानकरणम् शापदानं च । २ । ९--१७ ॥ तदवतारभूतो वीरभद्रः । ५ । २--६ ॥ तेन सतीदेव्याः सान्त्वनम् । ३ । १६--॥ तत्पार्षदैर्दक्षयज्ञध्वंसार्थं यत्नः । ४ । ३२ ॥ यज्ञध्वंसः । ५ । १४ ॥ तत्स्तुतिर्ब्रह्मकृता । ६ । ४२–५० ॥ तत्स्तुतिः प्रजापतिकृता । अ० ७ । २१–३५ ॥ तत्स्तुतिः दितिकृता । तृ० १४ । ३३–३५ ॥ तन्माहात्म्यम् । तृ० १४ । २४–२८, ३४–३५ ॥ च० २ । २ ॥ ३ । ११ ॥ ४ । ११, १४--१६ ॥ ५ । १०--११ ॥ ६ । ३२–४२ ॥ ७ । १४ ॥ २४ । १७--१८ । २५ ॥ न० ९ । ७ ॥ द० ८८ । ३ ॥ तन्मन्त्रम् । पं० १७ । १७ ॥ तत्कृता भगवत्स्तुतिः । तृ० १४ । ३४--३५ ॥ च० २४ । ३३--६८ ॥ पं० १७ । १७--२४ ॥ अ० १२ । ४--१२ ॥ द० ६३ । ३४--४५ ॥ द० ६३ । ३४--४५ ॥ तेन पार्वतीं प्रति भगवद्भक्तानां माहात्म्यकथनम् । प० १७ । २७ ॥ तेन विषपानम् । अ० ७ । १८-४६ ॥ तस्य मोहिनीरूपदर्शनेन विकारोत्पत्तिः । १२ । २४ ॥ रुद्रेण यज्ञवास्तुगतद्रव्यस्य नाभागाय दानम् । न० ४ । ५--१० ॥ तेन भस्मासुराय वरदानादिकथा । द० ८८ । १४–४० ॥

**रुद्रगीतम्** । श्रीरुद्रेण प्रचेतोभ्य उपदिष्टम् । च० २४ । १९--७९ ॥

**रुद्रसावर्णिः** । द्वादशो मनुः । अ० १३ । २७ ॥

**रुद्राः** । एकादश रुद्राः कोटिशो रुद्राश्च । भूतप्रजापतेः पुत्राः तन्माता दक्षप्रजापतिपुत्री सरूपा । **ष० ६ । १७ ॥**

**रुशद्रथः** । क्ष० सो० वं० । अनुराजवंशोत्पन्नस्य तितिक्षोः पुत्रः । तत्पुत्रो हेमः । **न० २३ ।** ४ ॥

**रुशेकुः** । क्ष० सो० वं० । श्वाहेः पुत्रः । तत्पुत्रः ५ चित्ररथः । न० २३ । ३१ ॥

**रुषाभानुः** । हिरण्याक्षस्य भार्या । **स० २ । १९ ॥**

**रूपम्** । तेजोगुणः । **तृ० २६ । ३८ ॥**

**रूपवती** । क्रौञ्चद्वीपस्था नदी । **पं० २० । २१ ॥**

**रेणुका** । रेणोः पुत्री । जमदग्नेर्भार्या । **न० १५** १२ ॥ तस्या हननं तत्पुत्रेण परशुरामेण पुनस्तस्या भर्त्रा उज्जीवनं च । **१६ । २--८ ॥**

**रेतःकुल्या** । लालाभक्षशब्दं पश्यत ॥

**रेवतः** । क्ष० सू० वं० । आनर्तस्य पुत्रः । तत्पुत्राः ककुद्मिप्रभृतयः शतम् । **न० ३ । २७--२९ ॥**

१ **रेवती** । ककुद्मिनः पुत्री । बलरामस्य भार्या । **न० ३ ।** ३६ ॥

२ **रेवती** । मित्रनामकादित्यस्य भार्या । तत्पुत्रः उत्सर्गः । **ष० १८ । ६ ॥**

**रेवा** । नदी । **पं० १९ । १८ ॥ द० ७९ । २१ ॥**

**रैभ्यः** । क्ष० सो० वं० । सुमतेः पुत्रः । तत्पुत्रो दुष्यन्तः । **न० २० । ७ ॥**

१ **रैवतः** । प्रियव्रतस्य द्वितीयभार्यायाः पुत्रः । पञ्चम-मन्वन्तराधिपः । **पं० १ । २८ ॥** सः उत्तम तामसयोः सोदरः । तत्पुत्रा बलिविन्ध्यादयः । **अ० ५ । १--२ ॥**

२ **रैवतः** । एकादशरुद्रेष्वन्यतमः । **ष० ६ । १७ ॥**

३ **रैवतः** । रेवतपुत्रस्य ककुद्मिनो नामान्तरम् । तेन स्वपुत्र्या रेवत्या वरप्रश्नार्थे ब्रह्मलोकगमनम् । **न० ३ । २९--३० ॥**

**रैवतकः** । पर्वतः । **पं० १९ । १६ ॥** तत्र बलरामस्य स्त्रीभिः सह क्रीडा तेन द्विविदवधश्च ॥ **द० ६७ ॥**

**रैवतमन्वन्तरम्** । पञ्चममन्वन्तरशब्दं पश्यत ॥

१ **रोचनः** । तुषितेष्वन्यतमः । **च० १ । ७ ॥** तुषितशब्दं च पश्यत ॥

२ **रोचनः** । स्वारोचिषमन्वन्तरीय इन्द्रः । **अ० १ ।** २० ॥

१ **रोचना** । वसुदेवस्य भार्या । तत्पुत्राः हस्तः हेमाङ्गदः इत्याद्याः । **न० २४ । ४९ ॥**

२ **रोचना** । रुक्मिणः पौत्री अनिरुद्धस्य भार्या । **द० ६१ । २५ ॥**

**रोचिः** । विभावसुनामकवसोः पुत्रः । **ष० ६ । १६ ॥**

**रोचिष्मान्** । स्वारोचिषमनोः पुत्रः । **अ० १ । १९ ॥**

**रोधस्वती** । नदी । **पं० १९ । १८ ॥**

१ **रोमपादः** । क्ष० सो० वं० । धर्मरथस्य पुत्रः । तस्य चित्ररथ इति नामान्तरम् । अप्रजसस्तस्य दशरथपुत्र्याः शान्तायाः पुत्रीत्वेन स्वीकारः । **न० २३ । ७ ।** तत्पुत्रः चतुरङ्गः । १० ॥

१ **रोमपादः** । क्ष० सो० वं० । विदर्भस्य पुत्रः । तत्पुत्रो बभ्रुः । **न० २४ । १--२ ॥**

**रोमहर्षणः** । व्यासशिष्यः सूतः पौराणिकः । **प्र० ४ । २२ ॥** तस्य वधो बलरामेण । **द० ७८ ।** २२--२८ ॥ तत्पुत्रः सूतपौराणिकः ॥

**१ रोहिणी** । वसुदेवस्य भार्या । तत्पुत्राः बलः गदः सारणः दुर्मदः विपुलः ध्रुवः कृतः इत्याद्याः । **न०** २४ । ४६ ॥

**२ रोहिणी** । श्रीकृष्णस्य भार्या । षोडशसहस्रान्तर्गता । तत्पुत्रा दीप्तिमत्प्रभृतयः । **द०** ६१ । १८ ॥

**रोहितः** । क्ष० सू० वं० । हरिश्चन्द्रस्य पुत्रः । तस्य कथा । **न०** ७ । ९--२७ ॥ तत्पुत्रो हरितः । **न०** ८ । १ ॥

**रौद्राश्वः** । क्ष० सो० वं० । अहंयातेः पुत्रः । तत्पुत्राः ऋतेयुप्रभृतयो दश घृताच्यामप्सरसि जाताः ॥ **न०** २० । ३--५ ॥

**रौरवः** । नरकः । **पं०** २६ । ७, १० ॥

## ल०

**लक्षणा** । १ लक्ष्मणाशब्दं पश्यत ॥

**लक्ष्मणः** । क्ष० सू० वं० । दशरथस्य पुत्रः । **न०** १० । ३ ॥ तस्य पुत्रौ अङ्गदः चित्रकेतुश्च । **न०** ११ । १२ ॥

**१ लक्ष्मणा** । (माद्री) मद्राधिपतेः पुत्री । श्रीकृष्ण महिषी । **द०** ५८ । ५७ ॥ तस्या विवाहकथा । **८३** । १७--३९ ॥ तत्पुत्राः । **६१** । १५ ॥

**२ लक्ष्मणा** । दुर्योधनस्य पुत्री । तस्याः हरणं जाम्बवती-पुत्रेण साम्बेन **द०** ६८

**लक्ष्मीः** । श्रीशब्दं पश्यत ॥

**लघिमा** । सिद्धिः । **ए०** १५ । १२ ॥

**लघुः** । कालविशेषः । **तृ०** ११ । ८ ॥

**लङ्का** । जम्बूद्वीपस्योपद्वीपः । **पं०** १९ । ३० ॥

**लता** । मेरोः पुत्री । इलावृतस्य भार्या । **पं०** २ । १९--२३ ॥

**लम्बा** । २ दक्षप्रजापतिपुत्री । धर्मप्रजापतेर्भार्या । तत्पुत्रो विद्योतः । **प०** ६ । ५ ॥

**लम्बोदरः** । आन्ध्रराजः । **द्वा०** १ । २४ ॥

**लयः** । प्रलयशब्दं पश्यत ॥

**लयचिन्तनप्रकारः** । **प्र०** १५ । ४१ । ४२ ॥

**लयप्रकरणम्** । **ए०** २४ । २०--२६

**१ लवः** । क्ष० सू० वं० । श्रीदाशरथिरामस्य पुत्रः । **न०** ११ । ११ ॥

**२ लवः** । कालविशेषः । **तृ०** ११ । ६ ॥

**लवणः** । असुरः । मधोः पुत्रः । दाशरथिना शत्रुघ्नेन हतः । **न०** ११ । १४ ॥

**लाभः** । उत्तमा भगवद्भक्तिः । **ए०** १९ । ४० ॥

**लालाभक्षः** । (रेतःकुल्या) नरकः । **पं०** २६ । ७ । २६ ॥

**लुब्धककुलिङ्गमिथुनकथा** । **सं०** २ । ५०--५६ ॥

**लोकः** । भुवनम् । ते च सप्त ऊर्ध्वलोकाः सप्ताधोलोका इति चतुर्दश । भूः भुवः स्वः महः जनः तपः सत्यम् इति सप्तोर्ध्वलोकाः । अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालम् इति सप्ताधोलोकाः । **द्वि०** १ । २६--२८ ॥

**लोकालोकः** । पर्वतः । **पं०** २० । ३६ ॥

**लोभः** । दम्भस्य पुत्रः । तद्भार्या निकृतिः । तत्पुत्रौ क्रोधः हिंसा च दम्पती । **च०** ८ । ३ ॥ तस्य ब्रह्मण अधरोष्ठादुत्पत्तिः । **तृ०** १२ । २६ ॥

**लोमानि** । रोमाणि । उत्पत्तिः । **द्वि०** १० । २३ ॥

**लोहितार्णः** । क्रौञ्चद्वीपस्थं वर्षम् । **पं०** २० । २१ ॥

**लौगाक्षिः** । सामग ऋषिः । पौष्यञ्जेः शिष्य । **द्वा०** ६ । ७९ ॥

## व०

**वङ्गः** । क्ष० सो० वं० । २ बलेर्भार्यायां दीर्घतमस ऋषेर्जातः पुत्रः । **न० २३** । ५ ॥

**वज्रम्** । इन्द्रस्यायुधम् । दधीचिऋषेरस्थिभिर्निर्मितम् । **ष० १०** । १--१३ ॥

**वज्रः** । क्ष० सो० वं० । अनिरुद्धस्य पुत्रः । तन्माता रुक्मिणः पौत्री रोचना । **द० ९०** । ३७ ॥ तस्य मधुरायां पट्टाभिषेकः । **प्र० १५** । ३९ ॥

**वज्रकण्टकशाल्मली** । नरकः । **पं० २६** । ७ । २१ ॥

**वज्रकूटः** । प्लक्षद्वीपस्थः पर्वतः । **पं० २०** । ४ ॥

**वज्रनाभः** । क्ष० सू० वं० । बलस्थलस्य पुत्रः । **न० १२** । २--३ ॥

**वज्रमित्रः** । क्ष० । शुङ्गवंशीयस्य घोषस्य पुत्रः । **द्वा० १** । १७ ॥

**वटपत्रशायी** । नारायणः । मार्कण्डेयेन तद्दर्शनम् । **द्वा० ९** । २०--३९ ॥

**वटोदका** । नदी । **च० २८** । ३५ ॥

**१ वत्सः** । प्रतर्दनस्य नामान्तरम् । **न० १७** । ६ ॥

**२ वत्सः** । क्ष० सो० वं० । सेनजितः पुत्रः । **न० २१** । २३ ॥

**वत्सकः** । क्ष० सो० वं० । २ शूरस्य पुत्रः । **न० २४** । २९ ॥ तस्य मिश्रकेश्यामप्सरसि जाताः पुत्राः ६ वृकादयः । ४३ ॥

**वत्सप्रीतिः** । क्ष० सू० वं० । भलन्दनस्य पुत्रः । तत्पुत्रः प्रांशुः । **न० २** । २३--२४ ॥

**१ वत्सरः** । कालविशेषः । स पञ्चविधः । **तृ० ११** । १३--१४ ॥ **पं० २२** । ७ ॥

**२ वत्सरः** । क्ष० । ध्रुवस्य पुत्रः । तन्माता भ्रमिः । **च० १०** । १ ॥ तस्य राज्याभिषेकः । **च० १३** । ११ ॥ तद्भार्या स्वर्वीथी । तत्पुत्राः पुष्पार्णः तिग्मकेतुः इषः ऊर्जः वसुः १ जयश्चेति षट् । **च० १३** । १२--॥

**वत्सवृद्धः** । क्ष० सू० वं० । उरुक्रियस्य पुत्रः । तत्पुत्रः प्रतिव्योमः । **न० १२** । १० ॥

**वत्सासुरहननम्** । श्रीकृष्णेन । **द० ११** । ४१--४४ ॥

**वनः** । (**वेनः**) । क्ष० सो० वं० । उशीनरस्य पुत्रः । **न० २३** । ३ ॥

**वनस्पतिः** । क्रौञ्चद्वीपस्थं वर्षम् । **पं० २०** । २१ ॥

**वनेयुः** । क्ष० सो० वं० । रौद्राश्वस्य पुत्रः । **न० २०** । ५ ॥

**वयुनः** । कृशाश्वस्य पुत्रः । तन्माता धिषणा । **ष० ६** । २० ॥

**वयुना** । अग्निष्वात्तादिपितॄणां पुत्री । तन्माता स्वायंभुवदक्षपुत्री स्वधा । तस्याः स्वसा धारिणी । ते उभे ब्रह्मवादिन्यौ । **च० १** । ६४ ॥

**वराहः** । भगवतोऽवतारः । **प्र० ३** । ७ ॥ **द्वि० ७** । १ ॥ ब्रह्मणो नासाविवरादुत्पन्नः । **तृ० १३** । १८ ॥ तद्वर्णनम् । २७--३० ॥ तत्स्तुतिः । ३४--४५ ॥ हिरण्याक्षेण सह युद्धम् । **१८** । **१९** ॥ हिरण्याक्षवधः । **१३** । ३२ ॥ **१९** । २५--२६ ॥

**वराहकल्पः** । **तृ० ११** । ३६ ॥

**वराहमन्त्रः** । **पं० १८** । ३५ ॥

**वरीयान्** । ऋ० । पुलहऋषेः पुत्रः । माता गतिः । च० १ । ३८ ॥

**वरुणः** । पश्चिमदिक्पालको देवः । कश्यपस्य पुत्रः । तन्माता अदितिः । ष० ६ । ३९ ॥ अयं द्वादशादित्येष्वन्यतमः । तद्भार्या चर्षणी । तस्य यज्ञीयाग्निकुण्डादुत्पन्नः पुत्रः २ भृगुः । ष० १८ । ४ ॥ वल्मीके पतितात्त्द्रेतसो जातः पुत्रः वाल्मीकिऋषिः । ५ ॥ तस्याऽपरः पुत्रो दक्षसावर्णिः । अ० १३ । १८ ॥ तस्य राजधानी विभावरी । तृ० १७ । २६ ॥ तत्सकाशे युद्धाय हिरण्याक्षस्य गमनम् । २४–३१ ॥ तत्सकाशं गतस्य श्रीकृष्णस्य तेन स्तुतिः । द० २८ । ५–८ ॥

**वर्णाः** । ब्राह्मणादयश्चत्वारः । स० ११ ॥

**वर्धनः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । माता मित्रविन्दा । द० ६१ । १६ ॥

**वर्धमानः** । क्रौञ्चद्वीपस्थः पर्वतः । पं० २० । २१ ॥

**वर्षः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता उपदेवा । न० २४ । ५१ ॥

**वर्षऋतुवर्णनम्** । द० १८ । ४–७ ॥ २० । ३–२४ ॥

**वल्कः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता इला । न० २४ । ४९ ॥

**वशित्वम्** । सिद्धिः । तत्प्राप्त्युपायः । ए० १५ । १६ ॥

**वषट्** । देवेभ्यो हविर्दानम् । द्वि० ७ । ३८ ॥

**१ वसिष्ठः** । ब्रह्मर्षिः ब्रह्मणो दशसु मानसपुत्रेष्वन्यतमः । ब्रह्मणः प्राणाज्जातः । तृ० १२ । २०–२३ ॥ तस्य भार्या कर्दमप्रजापतेः पुत्री अरुन्धती (ऊर्जा) । पुत्राः चित्रकेत्वादयः । च० १ । ४०–४१ ॥ [कदाचिद्रुद्रशापाद्ब्रह्मणो मानसपुत्रेषु नष्टेषु अयमपि मृतः । इयं कथा पुराणान्तरे प्रसिद्धा ।] सा अत्रापि सूचिताऽस्ति । पश्यत च० ३० । ४८ ॥ तत्र महदवज्ञानादित्यस्य रुद्रशापादित्यर्थः । तेन स शापो न केवलं दक्षाय किंतु उपलक्षणया मरीच्यादीनामपि ॥

**२ वसिष्ठः** । अयं द्वितीयवारमपि ब्रह्मणः यज्ञकुण्डात् जातः । अयमेवेक्ष्वाकुवंशस्य पुरोहितः । भार्या अक्षमाला । इयं कथा महाभारते उद्योगपर्वणि प्रसिद्धा । सोऽपि निमिराजस्य शापान्मृतः । न० १३ । ५ ॥

**३ वसिष्ठः** । उर्वशीदर्शनक्षुभितयोः मित्रावरुणयोर्वीर्यात्कुम्भे पतिताज्जातः । प्रथमस्यैवेदं तृतीयं जन्म । तदाऽस्य भ्राता २ अगस्त्यः । अस्य भार्या नारदभगिनी अरुन्धती । पुत्राः शक्तिऋषिप्रभृतयः । पौत्रः पराशरः । प० १८ । ५ ॥

**१ वसुः** । क्ष० सू० वं० । भूतज्योतिषः पुत्रः । तत्पुत्रः प्रतीकः । न० २ । १७–१८ ॥

**२ वसुः** । ध्रुवपुत्रस्य २ वत्सरस्य पुत्रः । माता स्वर्वीथी । च० १३ । १२ ॥

**३ वसुः** । दक्षप्रजापतिपुत्री । धर्मप्रजापतेर्भार्या । तत्पुत्रा अष्टौ वसवः । प० ६ । १० ॥

**४ वसुः** । अष्टवसुष्वन्यतमः । धर्मप्रजापतेः पुत्रः । तन्माता ३ वसुः । तद्भार्या आङ्गिरसी । तत्पुत्रः कृतीपतिर्विश्वकर्मा । प० ६ । १५ ॥

**५ वसुः । वसवः** । ते चाष्टौ । धर्मप्रजापतेः पुत्राः । तेषां नामानि । द्रोणः प्राणः ध्रुवः अर्कः अग्निः

दोषः वसुः विभावसुश्चेति । ष० ६ । ११ ॥ द्वि० ३ । ३ ॥

६ **वसुः** । क्ष० सू० वं० । २ कुशस्य पुत्रः । न० १५ । ४ ॥

७ **वसुः** । उपरिचरः । क्ष० सो० वं० । पूरुवंशीयस्य कृतिनः पुत्रः । तत्पुत्राः बृहद्रथः कुशाम्बः मत्स्यः प्रत्यग्रः चेदिः इति पञ्च । न० २२ । ५–६ ॥

८ **वसुः** । नरकासुरपक्षीयो मुरस्य पुत्रोऽसुरः । द० ५९ । १२ ॥

९ **वसुः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता नाग्नजिती सत्या । द० ६१ । १३ ॥

१ **वसुदेवः** । क्ष० सो० वं० । यदुवंशीयस्य शूरस्य पुत्रः । न० २४ । २८ ॥ तस्य आनकदुन्दुभिरिति नामान्तरम् । २९–३० ॥ तस्य पत्नी देवकस्य पुत्री देवकी । तथा पौरवी रोहिणी भद्रा मदिरा रोचना इला इत्याद्याश्च देवकीस्वसारस्तद्भार्याः । ४५ ॥ तस्य देवक्या विवाहानन्तरं स्वगृहं प्रत्यागमनम् । द० १ । २९ ॥ तेन देवकीवधार्थमुद्यतस्य कंसस्य स्वपुत्राणां समर्पणप्रतिज्ञानेन तन्मोचनम् । ५४ ॥ कंसेन हतानां षण्णां तत्पुत्राणां पूर्वजन्मनि नामानि । स्मरः उद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृत् घृणी चेति । ८५ । ४८ ॥ तस्य भार्यायां देवक्यां श्रीकृष्णस्य पुत्रत्वेन जननम् । ३ । १–१२ ॥ तेन श्रीकृष्णस्य जननानुपदं यशोदाशयने न्यसनम् । ३ । ५१ ॥ तेन पूर्वं श्रीकृष्णजननसमये संकल्पितगोदानकरणम् । द० ४५ । २८ ॥ तेन यज्ञकरणम् । ८४ । ४२--५६ ॥ तेन नारदं प्रति भागवतधर्मप्रश्नः । ए० २ । ४--९ ॥ तेन श्रीकृष्णस्तुतिः । द० ३ । १३--२२ ॥ ८५ । ३--२० । स पूर्वजन्मनि सुतपा नाम प्रजातिः । ३ । ३२ ॥

२ **वसुदेवः** । क्ष० । प्रथमः कण्वः । तेन शुङ्गं देवभूतिं हत्वा स्वयं राज्यकरणम् । द्वा० १ । २० ॥

**वसुन्धराः** । शाल्मलिद्वीपस्थाः पुरुषाः । पं० २० । ११ ॥

**वसुभृद्यानः** । ऋषिः । वसिष्ठस्य पुत्रः । तन्माता ऊर्जा । च० १ । ४१ ॥

१ **वसुमान्** । क्ष० सो० वं० । श्रुतायोः पुत्रः । न० १५ । २ ॥

२ **वसुमान्** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता जाम्बवती । द० ६१ । १२ ॥

**वसुमित्रः** । क्ष० । शुङ्गस्य सुज्येष्ठस्य पुत्रः । द्वा० १ । १७ ॥

**वसुहंसः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता श्रीदेवा । न० २४ । ५१ ॥

**वसोर्धारा** । अग्निनामकवसोर्भार्या । तत्पुत्रा द्रविणकादयः । ष० ६ । १३ ॥

**वस्त्रापहारः** । श्रीकृष्णेन गोपकन्यानाम् । द० २२ ॥

**वस्वनन्तः** । क्ष० सू० वं० । निमिवंशीयस्य उपगुप्तस्य पुत्रः । तत्पुत्रः युयुधः । न० १३ । २५ ॥

**वहीनरः** । क्ष० सो० वं० । पाण्डववंश्यस्य दुर्मदस्य पुत्रः । तत्पुत्रः दण्डपाणिः । न० २२ । ४३ ॥

१ **वह्निः** । वागभिमानी देवः । द्वि० ६ । १ ॥ १८ । १९ ॥

२ **वह्निः** । क्ष० सो० वं० । ययातिपुत्रस्य तुर्वसोः पुत्रः । तत्पुत्रो भर्गः । न० २३ । १६ ॥

**३ वह्निः** । क्ष० सो० वं० । कुकुरस्य पुत्रः । तत्पुत्रो विलोमा । **न० २४** । १९ ॥

**४ वह्निः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता मित्रविन्दा । **द० ६१** । १६ ॥

**१ वाक्** । वागिन्द्रियम् । तस्योत्पत्तिः तदभिमानिदेवता च । **तृ० ६** । १२–१३ ॥

**२ वाक्** । ब्रह्मण आस्यादुत्पन्ना । **द्वि० ६** । १ ॥ १० । १९ ॥ **तृ० ६** । १२ ॥ **तृ० १२** । २६ ॥ तस्याः कामना ब्रह्मणा । २८–३४ ॥

**वाजपेयः** । यज्ञः । **तृ० १२** । ४० ॥ तत्करणं १ दक्षेण । **च० ३** । ३ ॥

**वाजसनी** । वाजिरूपेण सूर्येण ३ याज्ञवल्क्यायोपदिष्टा श्रुतिः । **द्वा० ६** । ७३–७४ ॥

**वातापिः** । असुरः । हिरण्यकशिपुपुत्रस्य ह्रादस्य पुत्रः । **ष० १८** । १५ ॥

**वात्स्यः** । ऋ० । बह्वृचस्य शाकल्यस्य पुत्र. । **द्वा० ६** । ५७ ॥

**वानप्रस्थः** । वैखानसाः वालखिल्याः औदुम्बराः फेनपाः इति चतुर्विधो वनस्थः तृतीयाश्रमी । **तृ० १२** । ४३ ॥ तद्धर्माः । **स० १२** । १७–३१ ॥ **ए० १८** । १–११ ॥

**१ वामः** । एकादशरुद्रेष्वन्यतमः । **ष० ६** । १७ ॥

**२ वामः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता भद्रा । **द० ६१** । १७ ॥

**वामदेवः** । शाल्मलिद्वीपस्थः पर्वतः । **पं० २०** । १० ॥

**१ वामनः** । लोकालोकपर्वतस्थः पश्चिमदिग्गजः । **पं० २०** । ३९ ॥

**२ वामनः** । भगवदवतारः कश्यपऋषेः पुत्रः । तन्माता अदितिः । तस्य उरुक्रम इति नामान्तरम् । तत्पत्नी कीर्तिः । पुत्रः बृहच्छ्लोकः । **ष० १८** । ८ ॥ तस्यावतारः । **द्वि० ७** । १७ ॥ **प्र० ३** । १९ ॥ तत्कथाविस्तारः । **अ० १८** । १ ॥ तस्य महाबलियज्ञवाटगमनम् । २० ॥ तेन पदत्रययाचनम् । १९ । १६ ॥

**वायकः** । तेन श्रीकृष्णरामयोर्वेषरचनम् । **द० ४१** । ४०–४१ ॥

**वायुतत्त्वम्** । तदुत्पत्तिः । **द्वि० ५** । २६ ॥ **६** । ४ ॥ **१०** । २० ॥ **तृ० ५** । ३२ । २६ । ३५–३७ ॥

**वायुतीर्थम्** । सरस्वतीनद्याम् । **तृ० १** । २२ ॥

**वाराणसी** । काशी पुरी । तद्दाहः सुदर्शनास्त्रेण । **द० ६६** । ४० ॥

**वाराहकल्पः** । **तृ० ११** । ३६ ॥

**वारिधारः** । पर्वतः । **पं० १९** । १६ ॥

**वारिसारः** । द्वितीयो मौर्यः । **द्वा० १** । १३ ॥

**वारुणी** । कादम्बरी । तस्या उत्पत्तिः । **अ० ८** । ३० ॥ तत्पानं बलरामेण । **द० ६५** । १९-२० ॥

**वार्क्षी** । प्रम्लोचानाम्न्या अप्सरसः पुत्री । तत्पिता कण्डुनामा महर्षिः ॥ वृक्षैः संवर्धिता । तस्या सोमेन दशभ्यः प्रचेतोभ्यो दानम् । **च० ३०** । १३–२० ॥ **ष० ४** । १५–१६ ॥ तस्या मारिषेति नामान्तरम् ॥

**१ वालखिल्याः** । वानप्रस्थावान्तरप्रभेदः । **तृ० १२** । ४३ ॥

**२ वालखिल्याः** । क्रतुऋषेः पुत्राः । तन्माता कर्दमप्रजापतिपुत्री क्रिया । ते च षष्ठिसहस्रसंख्याकाः । **च० १** । ३९ ॥ तैः सूर्यस्याभिमुख्येन स्थित्वा सूक्तैः स्तुतिः । **पं० २१** । १७ ॥

**वालखिल्यसंहिता** । ऋग्वेदान्तर्गता । **द्वा० ६** । ५९ ॥

**वाली** । वानरेन्द्रः । श्रीरामेण हतः । **न० १०** । १२ ॥ तत्पुत्रोऽङ्गदः । १९ ॥

**वाल्मीकिः । प्राचेतसः** । ऋषिः । वल्मीके पतिताद्वरुणस्य वीर्यात् जातो महायोगी रामायणनिर्माता ऋषिः। **ष० १८** । ५ ॥ तदाश्रमगमनं सीतायाः । **न० ११** । १० ॥

**१ वासना** । कर्मवासना । **द्वि० २** । २ ॥

**२ वासना** । अर्कनामकवसोर्भार्या । **ष० ६** १३ ॥

**वासुकिः** । सर्पराजः । तेन मन्दरपर्वतं संवेष्ट्य समुद्रमथनम् । **अ० ७** । १ ॥

**वासुदेवद्वादशाक्षरमन्त्रः** । **च० ८** । ५३–५४ ॥

**वाहिनीपतिः** । क्ष० सू० वं० । **न० १२** । १० ॥

**विकम्पनः** । राक्षसः । तस्य वधः । **न० १०** । १८ ॥

**विकल्पः** । अवान्तरकल्पाख्यः कालविशेषः । **द्वि० ८** । १२ ॥ ९ । ३६ ॥

**विकल्पवसनाः** । **प्र० १७** । १९ ॥

**विकुक्षिः** । क्ष० सू० वं० । इक्ष्वाकोः पुत्रः । तस्य शशाद इति नामान्तरम् । तत्पुत्रः पुरञ्जयः । **न० ६** । ४–१२ ॥

**विकुण्ठः** । श्रीकृष्णः । **द्वि० ७** । ३१ ॥

**विकुण्ठा** । शुभ्रस्य पत्नी । तत्पुत्रो वैकुण्ठः । **अ० ५** । ४ ॥

**विकृतिः** । क्ष० सो० वं० । जीमूतस्य पुत्रः । तत्पुत्रः भीमरथः । **न० २४** । ४ ॥

**विग्रहपूजा** । प्रतिमापूजाशब्दं पश्यत ॥

**विचारुः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता रुक्मिणी । **द० ६१** । ९ ॥

**विचित्रः** । देवसावर्णिपुत्रः । **अ० १३** । ३० ॥

**विचित्रवीर्यः** । क्ष० सो० वं० । शन्तनोः पुत्रः । तस्य द्वे भार्ये । प्रथमा अम्बिका तस्यां व्यासाज्जातः पुत्रः धृतराष्ट्रः । द्वितीया अम्बालिका तस्यां व्यासाज्जातः पुत्रः पाण्डुः । तद्दास्यां शूद्रायां व्यासाज्जातः पुत्रः विदुरः । **न० २२** । २१–२५ ॥

**१ विजयः** । भगवतो द्वारपालकः । **तृ० १६** । २ ॥ विशेषं जयविजयशब्दे पश्यत ॥

**२ विजयः** । क्ष० सू० वं० । सुदेवस्य पुत्रः । तत्पुत्रो भरुकः । **न० ८** । १–२ ॥

**३ विजयः** । क्ष० सू० वं० । ४ जयस्य पुत्रः । तत्पुत्रः ऋतः । **न० १३** । २५ ॥

**४ विजयः** । क्ष० सो० वं० । पुरूरवसः पुत्रः । तत्पुत्रो भीमः । **न० १५** । १–३ ॥

**५ विजयः** । क्ष० सो० वं० । जयद्रथस्य पुत्रः । तद्भार्या संभूतिः । तत्पुत्रः धृतिः । **न० २३** । १२ ॥

**६ विजयः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता जाम्बवती । **द० ६१** । १२ ॥

**विजया** । पाण्डवस्य सहदेवस्य भार्या । तत्पुत्रः सुहोत्रः । **न० २२** । ३१ ॥

**विजिताश्वः** । अन्तर्धानशब्दं पश्यत ॥

**विडूरथः** । विदूरथशब्दं पश्यत ॥

**विज्ञानतत्त्वम्** । **द्वि०** २ । ३० ॥

**विज्ञानशक्तिः** । **द्वि०** १ । ३५ ॥ **तृ०** ९ । २४ ॥

**विज्ञानात्मा** । **प्र०** **१३** । ५४ ॥ **तृ०** **५** । २७ ॥

**वितथः** । क्ष० सो० वं० । ३ भरतस्य पुत्रः । पूर्वं यो भरद्वाजः सएव देवैरस्य पुत्रत्वेन दत्तः । तन्नामनिर्वचनम् ॥ **न०** २० । ३४–३९ ॥ तत्पुत्रो मन्युः । **२१** । १ ॥

**वितलम्** । द्वितीय अधोलोकः । **पं०** २४ । ७ ॥ तद्वर्णनम् । १७ ॥ तस्योत्पत्तिः । **द्वि०** १ । २७ ॥ **५** । ४० ॥

**वितस्ता** । नदी । **पं०** १९ । १८ ॥

**विताना** । सत्रायणस्य भार्या । तत्पुत्रो भगवदवतारो बृहद्भानुः । **अ०** **१३** । ३५ ॥

**१ विदर्भः** । ऋषभदेवस्य पुत्रः । **प०** ४ । १० ॥

**२ विदर्भः** । क्ष० सो० वं० । ज्यामघस्य पुत्रः । **न०** **२३** । ३९ ॥ तत्पुत्रः कुशः क्रथः रोमपादश्च । **न०** २४ । १ ॥

**विदुरः** । विचित्रवीर्यस्य भुजिष्यायां शूद्रां व्यासाज्जातः । **न०** २२ । २५ ॥ यमांशस्य तस्य माण्डव्यऋषिशापः । **तृ०** **५** । २० ॥ **प्र०** **१३** । १५ ॥ तेन धृतराष्ट्रस्य वैराग्योत्पादनम् । १८--२७ ॥ दुर्योधनापमानितस्य तस्य भारतयुद्धसमये तीर्थयात्राव्याजेन गमनम् । **तृ०** **१** । ६--१७ ॥ उद्धवेन सह संवादः । **तृ०** **१** । २४--४ । ३६ ॥ मैत्रेयेण संवादः । **तृ०** **५**—आचतुर्थस्कन्धसमाप्ति ॥ तीर्थयात्रातः प्रतिनिवृत्य हास्तिनपुरगमनम् । **प्र०** **१३** । १ ॥ **च०** **३१** । ३० ॥ प्रभासक्षेत्रे देहत्यागपूर्वकं स्वमूलरूपप्राप्तिः । **प्र०** **१५** ॥ ४९ ॥

**विदुरतीर्थयात्रा** । तृतीयचतुर्थस्कन्धयोः ॥

**१ विदूरथः** । क्ष० सो० वं० । २ वृष्णेः पुत्रः । **न०** **२४** । १८ ॥

**२ विदूरथः** । क्ष० सू० वं० । सुरथस्य पुत्रः । तत्पुत्रः सार्वभौमः । । **न०** **२२** । ९--१० ॥

**३ विदूरथः** । दन्तवक्रस्य भ्राता । श्रीकृष्णेन हतः । **द०** ७८ । ११–१२ ॥ **द्वि०** **७** । ३४ ॥

**विदेहः** । क्ष० सू० वं० । निमिराजस्य नामान्तरम् । **न०** १३ । ११ ॥

**विद्या** । आत्मनि भिदाबाधः (भिदाबोधः)। **द्वि०** **६** । २० ॥ **ए०** १९ । ४० ॥

**विद्याधराः** । ब्रह्मणा सृष्टाः । **तृ०** २० । ४४ ॥ चित्रकेतोः विद्याधराधिपत्यप्राप्तिः । **प०** **१६** । २८ ॥

**विद्योतः** । धर्मप्रजापतेः पुत्रः । तन्माता लम्बा । तत्पुत्रा : स्तनयित्नवः । **प०** **६** । ५ ॥

**१ विधाता** । भृगोः पुत्रः । तन्माता ख्यातिः । तद्भार्या मेरोः पुत्री नियतिः । तस्य पुत्रः प्राणः । **च०** **१** । ४३--४४ ॥

**२ विधाता** । कश्यपस्य पुत्रः । तन्माता अदितिः । **प०** **६** । ३९ ॥ तद्भार्या क्रिया । तत्पुत्राः पुरीष्या अग्नयः । **प०** **१८** । ४ ॥

**विधिर्निषेधश्च** । शास्त्रविहितानि प्रतिषिद्धानि च कार्याणि । **प्र०** २ । १४ ॥ **द्वि०** **१** । ५–३९ ॥ **२** । ३, ६, १३ ॥ **तृ०** **२६** । ७२ ॥ २८ । २--७ ॥ **२९** । २७--३४ ॥ **३१** । ४७ ॥ **३२** । ११, २२ ॥ **च०** **८** । ४०–४१ । ५९--६१ ॥ **११** । २७–२९ ॥

१२ । ५--६ ॥ २० । ३३ ॥ २२ । २१-२५ । ३९--४० ॥ २९ । ५५--७९ ॥ ३१ । ९--१४ । १८--१९ ॥ पं० ५ । १०--१४, २६ ॥ ११ । १७ ॥ १२ । १६ ॥ १३ । २० ॥ १८ । १४ ॥ स० १ । २५--३० ॥ ५ । ५ ॥ २३--२४ ॥ ६ । १--९ । १९ । ३४ ॥ ११ । ८--१२ ॥ द० १ । ४४ ॥ ४७ । १९--३७ ॥ ७३ । १७--२३ ॥ ७४ । ४० ॥ ए० ३ । २१--३२ । ४६--५५ ॥ ७ । ६ ॥ ८ । १--१० ॥ ९ । १० ॥ १० । १--११ ॥ ११ । १६--१७ ॥ १२ । १४--१५ ॥ १३ । १३ । २६--२९ । ३३--३५ ॥ १४ । २७--२९ ॥ १६ । ४२--४४ ॥ १७ । ५१--५८ । १८ । ३८--३९ ॥ १९ । ५ ॥ २० । १३--१४ । २४ ॥ २२ । ५६--५८ ॥ २३ । १९, ६१ ॥ २५ । ३३--३४ ॥ २६ । १--३ । २६ ॥ २८ । १, २३, २७ ॥ २९ । ९--१८ ॥ द्वा० ३ । ४९--५० ॥ ५ । ९ ॥ ६ । ३४ ॥

**विधिसारः** । क्षेत्रज्ञस्य पुत्रो मगधराजः । द्वा० १ । ६ ॥

१ **विधृतिः** । काचन स्त्री । तत्पुत्रा वैधृतयः । अ० १ । २९ ॥

२ **विधृतिः** । क्ष० सू० वं० । खगणस्य (शङ्खणस्य) पुत्रः । तत्पुत्रो हिरण्यनाभः । न० १२ । ३ ॥

१ **विनता** । सत्रायणस्य भार्या । तत्पुत्रो भगवदवतारो बृहद्भानुः । अ० १३ । ३५ ॥

२ **विनता** । दक्षप्रजापतिपुत्री । तार्क्ष्यनामकस्य कश्यपस्य भार्या । तस्याः सुपर्णेति नामान्तरम् । तत्पुत्रौ गरुडः अरुणश्च । प० ६ । २१--२२ ॥

**विन्ध्यः** । पर्वतः । पं० १९ । १६ ॥

**विन्ध्यावलिः** । महाबलेर्भार्या अस्या अशना कोटरा इति नामान्तरे । अ० २० । १७ ॥ तत्कृता भगवत्स्तुतिः । अ० २२ । २० ॥ तस्याः बाणादयः शतं पुत्राः । प० १८ । १७ ॥ द० ६३ । २०--२१ ॥

**विपाशा** । नदी तीर्थविशेषः । द० ७९ । ११ ॥

**विपुलः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता १ रोहिणी । न० २४ । ४६ ॥

**विपृष्ठः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता धृतदेवा । न० २४ । ५० ॥

**विप्रः** । क्ष० सो० वं० । सृतञ्जयस्य पुत्रः । तत्पुत्रः शुचिः । न० २२ । ४७ ॥

**विप्रचित्तिः** । दनुपुत्रोऽसुरः । तस्य शतं पुत्राः । तेषु ज्येष्ठो राहुः । ष० ६ । ३१--३७ ॥ तद्भार्या हिरण्यकशिपोः स्वसा सिंहिका । ष० १८ । १३ ॥

**विप्रपत्न्यनुग्रहः** । श्रीकृष्णेन । द० २३ ॥

**विभावरी** । वरुणस्य राजधानी । तृ० १७ । २६ ॥

१ **विभावसुः** । धर्मप्रजापतेः पुत्रः । तन्माता वसुः । तद्भार्या उषा । तत्पुत्राः व्युष्टः रोचिः आतपः पञ्चयामश्चेति चत्वारः । ष० ६ । १६ ॥

२ **विभावसुः** । दनुपुत्रोऽसुरः । ष० ६ । ३० ॥

३ **विभावसुः** । नरकासुरपक्षीयोऽसुरः । अयं पूर्वोक्त एव वाऽन्यो वेति न विद्मः । द० ५९ । १२ ॥

**विभीषणः** । राक्षसः विश्रवसः पुत्रः । तन्माता केशिनी । **च०** १ । २७ ॥ रावणस्य कनिष्ठो भ्राता । रामेण तस्य पट्टाभिषेकः । **न०** १० । ३२ ॥ तस्य श्रीरामेण कल्पान्तमायुर्दानम् । ३३ । तस्य भगवद्भक्तत्वम् । **द्वि०** ७ । ४५ ॥

**१ विभुः** । तुषितेष्वन्यतमः । **च०** १ । ७ ॥ शेषं तुषितशब्दे पश्यत ॥

**२ विभुः** । प्रस्तावस्य पुत्रः । माता नियुत्सा । तद्भार्या रतिः । तत्पुत्रः पृथुषेणः । **पं०** १५ । ६ ॥

**३ विभुः** । भगनामकादित्यस्य पुत्रः । माता सिद्धिः । **ष०** १८ । २ ॥

**४ विभुः** । वेदशिरसः पुत्रः । माता तुषिता । **अ०** १ । २१–२२ ॥

**५ विभुः** । पञ्चममन्वन्तरीय इन्द्रः । **अ०** ५ । ३ ॥

**विभूतयः** । भगवतो विविधतया भवनम् । **ए०** १६ । १०–४१ ॥

**विमलः** । क्ष० सू० वं० । सुद्युम्नस्य पुत्रः । **न०** २ । ४१ ॥

**वियतिः** । क्ष० सो० वं० । नहुषस्य पुत्रः । **न०** १८ । १ ॥

**विरक्तिः** । गुणः । **प्र०** १६ । २८ ॥

**१ विरजः** । पूर्णिम्नः पुत्रः । **च०** १ । १४ ॥

**२ विरजः** । त्वष्टुः पुत्रः । माता विरोचना । तद्भार्या विषूची । तत्पुत्राः शतजित्प्रभृतयः शतम् । **पं०** १५ । १५ ॥

**विरजस्कः** । सावर्णिमनोः पुत्रः । **अ०** १३ । ११ ॥

**१ विरजाः** । ऋ० । वसिष्ठस्य पुत्रः । तन्माता ऊर्जा **च०** १ । ४०–४१ ॥

**२ विरजाः** । सावर्णिमन्वन्तरीया देवाः । **अ०** १३ । १२ ॥

**३ विरजाः** । जातूकर्ण्यस्य शिष्यो बह्वृच ऋषिः । **द्वा०** ६ । ५८ ॥

**विराट्पुरुषः** । भगवान् । **तृ०** ६ । ४ ।

**विराड्देहः** । भगवतः स्थूलदेहः । **तृ०** ६ । ९ ॥ ७ । २१–२२ ॥ तस्य ध्यानप्रकारः । **द्वि०** १ । २४–३९ ॥ तद्विभूतिकथनम् । **प्र०** ३ । ३०-३१ ॥ **द्वि०** ६ ॥

**विरुद्धाः** । दशममन्वन्तरीया देवाः । **अ०** १३ । २२ ॥

**विरूपः** । क्ष० सू० वं० । १ अम्बरीषस्य पुत्रः । तत्पुत्रः पृषदश्वः । **न०** ६ । १ ॥

**विरूपाक्षः** । दनुपुत्रोऽसुरः । **ष०** ६ । ३१ ॥

**विरोचनः** । प्रह्लादपुत्रोऽसुरः । तत्पुत्रो महाबलिः । **ष०** १८ । १६ ॥ तेन देवेभ्यः स्वायुश्शेषस्य दानम् । **अ०** १९ । १४ ॥

**विरोचना** । प्रह्लादस्य पुत्री । त्वष्टुर्भार्या । **पं०** १५ । १५ ॥ रचना इति नामान्तरम् । तत्पुत्रौ संनिवेशो विश्वरूपाचार्यश्च । **ष०** ६ । ४४ ४५ ॥

**विलोमा** । क्ष० सो० वं० । ३ वह्नेः पुत्रः । तत्पुत्र कपोतरोमा । **न०** २४ । १९–२० ॥

**विवस्वान** । सूर्यः । कश्यपस्य पुत्रः । तन्माता अदितिः । तद्भार्या संज्ञा । तत्पुत्राः श्राद्धदेवनामा एतन्मन्वन्तरेश्वरो मनुः यमः यमी च । संज्ञाया प्रतिकृतौ छायानाम्न्यां भार्यायां जातौ पुत्रौ शनैश्चरः सावर्णिनामा अष्टमो मनुः तपती च । वडवारूपधारिण्यां संज्ञायां जातौ पुत्रौ नासत्यौ । **ष०** ६ । ३८ ४१ ॥ **अ०** १३ । ८-१० ॥

**विविंशतिः**। क्ष० सू० वं०। ३ चाक्षुषस्य पुत्रः। तत्पुत्रो रम्भः। **न० २**। २४-२५॥

**विशदः**। क्ष० सो० वं०। पूरुवंशोत्पन्नस्य जयद्रथस्य पुत्रः। तत्पुत्रः सेनजित्। **न० २१**। २३॥

**विशसनम्**। (वैशसम्)। नरकः। **पं० २६**। ७, २५॥

**विशाखः**। स्कन्दस्य पुत्रः। **प० ६**। १४॥ [तन्माता देवसेना।]

**विशाखयूपः**। पालकस्य पुत्रो मगधराजः। **द्वा० १**। ३॥

**विशालः**। क्ष० सू० वं०। तृणबिन्दोः अलम्बुषाया-मुत्पन्नः पुत्रः। तेन वैशालीनामकपुरीनिर्माणम्। **न० २**। ३०-३३॥ तत्पुत्रो हेमचन्द्रः। ३४॥

**विशाला**। हिमवत्पर्वतस्थः पुण्यक्षेत्रविशेषः। सैव बदरी। तत्र ध्रुवेण तपश्चरणम्। **च० १२**। १६॥ **ए० २९**। ४७॥

**विशोकः**। अशोक इत्यपिनाम। त्रिवक्रायाः पुत्रः। भीमसेनस्य सारथिः। **द० ९०**॥

**विश्रवाः**। ऋषिः। पुलस्त्यस्य पुत्रः। तन्माता हविर्भुक्। तस्य भार्या इडविडा। तत्पुत्रः ऐडविलः कुवेरः। तस्य अन्या भार्या काचन राक्षसी। तत्पुत्राः रावण-कुम्भकर्णविभीषणाः। **च० १**। ३६-३७॥ **न० २**। ३२॥

**विश्रुतः**। क्ष० सो० वं०। वसुदेवस्य पुत्रः। तन्माता सहदेवा। **न० २४**। ५२-५३॥

१ **विश्वकर्मा**। ४ वसोः पुत्रः। तन्माता बृहस्पते-र्भगिनी आङ्गिरसी। भार्या १ कृती। पुत्रः चाक्षुषो मनुः। **प० ६**। १५॥

२ **विश्वकर्मा**। कश्चन प्रजापतिः। तत्पुत्र्यौ संज्ञा छाया च विवस्वतो भार्ये। **अ० १३**। ८॥

**विश्वगः**। पूर्णिम्नः पुत्रः। **च० १**। १४॥

१ **विश्वजित्**। यागविशेषः। महाबलिना कृतः। **अ० १५**। ४॥

२ **विश्वजित्**। क्ष० सो० वं०। ३ सत्यजितः पुत्रः। तत्पुत्रः २ रिपुञ्जयः। **न० २२**। ४०॥

**विश्वधारः**। मेधातिथेः पुत्रः। शाकद्वीपस्थं वर्षं च। **पं० २०**। २५॥

**विश्वरन्धिः**। क्ष० सू० वं०। पृथुराजस्य पुत्रः। तत्पुत्रः २ चन्द्रः। **न० ६**। २०॥

**विश्वरूपः**। २ त्वष्टुः पुत्रः। तन्माता रचना। तस्य भार्या रोचना। **प० ६**। ४४-४५॥ तस्य देवैः पौरोहित्येन वरणम्। **प० ७**। २७-३६॥ तस्य त्रयाणां शिरसां इन्द्रेण छेदनम्। **प० ९**। १-४॥ तस्य भ्राता वृत्रः। ११-१८॥

**विश्वरूपम्**। भगवतः परिपूर्णं रूपम्। सर्वात्मकं रूपं वा। **द्वि० १**। २३-३९॥ **५**। ३५-४२॥ ६। १-१०॥ १०। १३-३२॥ **च० ९**। १३॥ वामनेन महाबलये दर्शितम्। **अ० २०**। २१-३३॥ यशोदायै श्रीकृष्णेन प्रदर्शितम्। **द० ७**। ३६-३७॥ ८। ३७-३८॥ ४०। १३-१५॥ **६३**। ३५-१६॥ **ए० १६**। १०-४१॥ **द्वा० ११**। ५-९॥

**विश्वसहः**। क्ष० सू० वं०। ऐडविडस्य पुत्रः। तत्पुत्रः खट्वाङ्गः। **न० ९**। ४१॥

**विश्वसाह्वः**। क्ष० सू० वं०। महस्वतः पुत्रः। तत्पुत्रः प्रसेनजित्। **न० १२**। ७-८॥

**विश्वसृजः**। मरीच्यादयः प्रजापतयः। तत्कृतसत्रयागकथा। **च० २**। ४–॥ **प्र० ३**। २॥

**१ विश्वा**। नदी। **पं० १९**। १८॥

**२ विश्वा**। दक्षप्रजापतिपुत्री। धर्मप्रजापतेर्भार्या। तत्पुत्रा विश्वे देवाः। **ष० ६**। ७॥

**विश्वामित्रः**। क्ष० सो० वं०। गाधेः पुत्रः। पश्चात्तपसा ब्राह्मण्यं प्राप्तः। तस्य एकाधिकशतं पुत्राः। तेषु मधुच्छन्दा मध्यमः। **न० १६**। २८–२९॥ तेन शुनःशेपस्य ज्येष्ठपुत्रत्वेन कल्पनम्। **न० १६**। ३०–३५॥ तेन स्वपुत्राणां शापदानम्। ३३॥ तस्यान्ये पुत्राः अष्टक हारीत जय क्रतुमदादयः। **न० १६**। ३६॥ तत्कृतयज्ञरक्षणं श्रीरामेण। **न० १०**। ५॥ तस्य मेनकायां जाता पुत्री शकुन्तला। २०। १३–॥

**विश्वावसुः**। गन्धर्वः। तेन हर्म्यस्थां कन्दुकेन क्रीडन्तीं देवहूतिं दृष्ट्वा मोहितेन विमानात्पतनम्। **तृ० २२**। १७॥

**विश्वेदेवाः**। धर्मप्रजापतेः पुत्राः। तन्माता दक्षप्रजापतिपुत्री विश्वा। तेषां प्रजा नास्ति। **ष० ६**। ७॥

**विषम्**। हालाहलाख्यम्। तस्योत्पत्तिरमृतमथनसमये। **अ० ७**। १८॥ तत्पानं रुद्रेण। ४२॥

**१ विषूची**। विरजस्य भार्या। **पं० १५**। १५॥

**२ विषूची**। १ विष्वक्सेनस्यमाता। **अ० १३**। २३॥

**विष्णुदूताः**। तेषां यमदूतैः संवादः। **ष० १**। ३०–॥ तद्रूपवर्णनम्। ३४–३६॥ तैर्भगवन्नामोच्चारणस्य माहात्म्यकथनम्। २। २–२०॥

**विष्णुपार्षदाः**। जयविजयादयः। **अ० २१**। १६–१७॥ सुनन्दनन्दादयः। **द्वि० ९**। १४॥

**विष्णुयशाः**। कल्किरूपभगवतः पिता। **प्र० ३**। २५॥

**विष्णुरातः**। परीक्षित्। **प्र० १२**। १६–१७॥

**विष्णुषडक्षरमन्त्रम्**। **ष० ८**। १०॥

**१ विष्वक्सेनः**। भगवदवतारः। तन्माता २ विषूची। **अ० १३**। २३॥

**२ विष्वक्सेनः**। भगवत्पार्षदः। **अ० २१**। १६॥

**३ विष्वक्सेनः**। क्ष० सो० वं०। ब्रह्मदत्तस्य पुत्रः। तन्माता गौः। तत्पुत्रः उदक्स्वनः। **न० २१**। २५–२६॥

**विस्तृतः**। क्ष० सू० वं०। निमिवंशस्य देवमीढस्य पुत्रः। तत्पुत्रो महाधृतिः। **न० १३**। १६॥

**विहङ्गमाः**। एकादशमन्वन्तरीया देवाः। **अ० १३**। २५॥

**वीतहव्यः**। क्ष० सू० वं०। १ शुनकस्य पुत्रः। तत्पुत्रः धृतिः। **न० १३**। २६॥

**१ वीतिहोत्रः**। क्ष०। प्रियव्रतस्य पुत्रः। **पं० १**। २५॥

**२ वीतिहोत्रः**। क्ष० सो० वं०। सुकुमारस्य पुत्रः। तत्पुत्रः १ भर्गः। **न० १७**। ९॥

**३ वीतिहोत्रः**। क्ष० सू० वं०। ४ इन्द्रसेनस्य पुत्रः। तत्पुत्रः सत्यश्रवाः। **न० २**। २०॥

**४ वीतिहोत्रः**। क्ष० सो० वं०। तालजङ्घस्य पुत्रः। **न० २३**। १८–२९॥

**१ वीरः**। क्ष० सो० वं०। श्रीकृष्णस्य पुत्रः। तन्माता नाग्नजिती सत्या। **द० ६१**। १३॥

**२ वीरः**। क्ष० सो० वं०। श्रीकृष्णस्य पुत्रः। तन्माता कालिन्दी। **द० ६१**। १४॥

**वीरभद्रः** । रुद्रांशः । रुद्रजटाया उत्पन्नः । तेन दक्षाध्वरध्वंसः । च० ५ । १–२६ ॥

**वीरव्रतः** । १ मधोः पुत्रः । तद्भार्या भोजा । तत्पुत्रौ मन्युः प्रमन्युश्च । पं० १५ । १५ ॥

**वीराः** । तामसमन्वन्तरीया देवाः । अ० १ । २८ ॥

**वीर्यधराः** । शाल्मलिद्वीपस्थाः पुरुषाः ॥ पं० २० । ११ ॥

**१ वृकः** । क्ष० । पृथुचक्रवर्तिनः पुत्रः । च० २४ । २ ॥

**२ वृकः** । असुरः । हिरण्यकशिपोः पुत्रः । स० २ । १८ ॥

**३ वृकः** । क्ष० सू० वं० । भरुकस्य पुत्रः । तत्पुत्रः बाहुकः । न० ८ । २ ॥

**४ वृकः** । क्ष० सो० वं० । २ शूरस्य पुत्रः । न० २४ । २९ ॥ तद्भार्या दुर्वाक्षी । तत्पुत्राः तक्षः पुष्करः शालः इत्याद्याः । ४३ ॥

**५ वृकः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । माता मित्रविन्दा । द० ६१ । १६ ॥

**६ वृकः** । क्ष० सो० वं० । वत्सकस्य पुत्रः । माता मिश्रकेशी अप्सराः । न० २४ । ४३ ॥

**७ वृकः** । २ शकुनेः पुत्रोऽसुरः । तस्य भस्मासुर इति प्रसिद्धं नाम । तस्मै रुद्रेण वरदानादिकथा । द० ८८ । १४–४० ॥

**वृकोदरः** । भीमसेनः । प्र० ७ । १३ ॥ ९ । १४ ॥ १० । १० ॥ तृ० १ । ११ ॥

**वृक्षाः** । कश्यपस्य पुत्राः । माता १ इला । तेषामुत्पत्तिः । ष० ६ । २८ ॥

**वृजिनवान्** । क्ष० सो० वं० । क्रोष्टोः पुत्रः । तत्पुत्रः श्वाहिः । न० २३ । ३० ॥

**वृत्तिः** । वार्तासंचयादिभेदेन चतुर्विधः । तृ० १२ । ४२ ॥

**वृत्तिरूपवती** । क्रौञ्चद्वीपस्था नदी । पं० २० । २१ ॥

**वृत्रः** । असुरः । २ त्वष्ट्रा इन्द्रशत्रुत्वेनोत्पादितः पुत्रः । ष० ९ । ११–१८ ॥ तद्रूपवर्णनम् । १३–१६ ॥ तस्य इन्द्रेण सह युद्धं त्रेतायां नर्मदातटे । १० । १५– ॥ तेन भगवत्स्तुतिः । ११ । २४–२७ ॥ इन्द्रेण तद्वधः । १२ । ३२ ॥ तद्वधेनेन्द्रस्य ब्रह्महत्याप्राप्तिः । १३ । १०– ॥ तस्य पूर्वजन्मनि चित्रकेतुनामकराजत्वम् । १४ । १० ॥

**वृद्धसेना** । बृहत्सेनेति नामान्तरम् । भरतपुत्रस्य १ सुमतेर्भार्या । तत्पुत्रः देवताजित् । पं० १५ । १–३ ॥

**१ वृषः** । क्ष० सो० वं० । ३ सृञ्जयस्य पुत्रः । तन्माता राष्ट्रपाली । न० २४ । ४२ ॥

**२ वृषः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता कालिन्दी । द० ६१ । १४ ॥

**३ वृषः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता नाग्नजिती सत्या । द० ६१ । १३ ॥

**१ वृषभः** । ऋषभशब्दं पश्यत ॥

**२ वृषभः** । क्ष० सो० वं० । कार्तवीर्यार्जुनस्य पुत्रः । न० २३ । २७ ॥

**वृषभराशिः** । पं० २१ । ४ ॥

**वृषपर्वा** । दनुपुत्रोऽसुरः । तत्पुत्री ययातेर्भार्या शर्मिष्ठा । ष० ६ ३१–३२ ॥

**वृषसेनः** । क्ष० सो० वं० । कर्णस्य पुत्रः । न० २३ । १४ ॥

**वृषाकपिः** । एकादशरुद्रेष्वन्यतमः । ष० ६ । १७ ॥

**वृषादर्भः** । क्ष० सो० वं० । २ शिबेः पुत्रः । **न०** २३ । ३ ॥

**वृष्टिमान्** । पाण्डववंश्यस्य कविरथस्य पुत्रः । तत्पुत्रः २ सुषेणः **न०** २२ । ४१ ॥

**१ वृष्णिः** । क्ष० सो० वं० । ३ मधोः पुत्रः । **न०** २३ । २९ ॥

**२ वृष्णिः** । क्ष० सो० वं० । सात्वतस्य पुत्रः । **न०** २४ । ६ ॥ तत्पुत्रः सुमित्रः । १२ ॥ तस्यान्यः पुत्रः विदूरथः । १८ ॥

**३ वृष्णिः** । क्ष० सो० वं० । युगन्धरस्य पुत्रः । तत्पुत्रौ श्वफल्कः चित्ररथश्च । **न०** २४ । १४ ॥

**वेगवान्** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता सत्या । **द०** ६१ । १३ ॥

**वेङ्कटः** । पर्वतः । **पं०** १९ । १६ ॥ **द०** ७९ । १३ ॥

**वेणा** । **वेणी** । नदी । **द०** ७९ । १२ ॥ **पं०** १९ । १८ ॥

**वेणुगीतम्** । श्रीकृष्णस्य । **द०** २१ ॥

**वेणुहयः** । क्ष० सो० वं० । ययातिवंश्यस्य २ शतजितः पुत्रः । **न०** २३ । २१ ॥

**वेण्या** । नदी । **पं०** १९ । १८ ॥

**वेदः** । अपौरुषेयो ग्रन्थः । तस्य ध्यायतो ब्रह्मणोऽभिव्यक्तिः । **तृ०** १२ । ३४–३७ ॥ तद्विभागः । **प्र०** ३ । २१ ॥ ४ । १९–२५ ॥ **द्वा०** ६ । ४९–॥ तेषां चतुर्णां नामानि । **प्र०** ४ । २० ॥ तदध्ययने स्त्रीशूद्रादीनां नाधिकारः । **प्र०** ४ । २५ ॥

**वेदऋषभः** । देवऋषभशब्दं पश्यत ॥

**वेददर्शः** । ऋषिः । कबन्धस्य शिष्यः । अथर्ववित् । सुमन्तोः प्रशिष्यः । तच्छिष्याः शौक्कायनिः ब्रह्मबलिः मोदोषः पिप्पलायनिश्चेति चत्वारः । **द्वा०** ७ । १–२ ॥

**वेदव्यासः** । पराशरस्य पुत्रः । तदवतारः । **प्र०** ३ । २१ ॥ तदवतारकालः । ४ । १४ ॥ **द्वि०** ७ । ३६ ॥ **द्वा०** ६ । ४९–॥ तच्छिष्याणां नामानि । २१ ॥ तत्समीपे नारदागमनम् । **प्र०** ४ । ३२ ॥ नारदं प्रति तस्य प्रश्नाः । **प्र०** ५ । ५ ॥ तेन भागवतं विरचय्य शुकायाध्यापनम् । **प्र०** ७ । ८ ॥ तस्याष्टममन्वन्तरीयऋषित्वम् । **अ०** १३ । १५–१६ ॥ तस्य स्तुतिः शुककृता । **द्वि०** ४ । २४ ॥

**वेदशाखा** । व्यासेन विभक्ता । **प्र०** ४ । २३ ॥

**१ वेदशिराः** । १ प्राणस्य पुत्रः । **च०** १ । ४५ ॥

**२ वेदशिराः** । कृशाश्वस्य पुत्रः । तन्माता २ दक्षपुत्री धिषणा । **प०** ६ । २० ॥

**३ वेदशिराः** । ऋ० । तद्भार्या तुषिता । तत्पुत्रो भगवदवतारो विभुः । **अ०** १ । २१ ॥

**४ वेदशिराः** । पञ्चममन्वन्तरीय ऋषिः । **अ०** ५ । ३ ॥

**वेदस्मृतिः** । नदी । **पं०** १९ । १८ ॥

**वेदिषद्** । **बर्हिषद्** । इति प्राचीनबर्हिषो नामान्तरम् । **च०** २४ । २७ ॥

**वेनः** । क्ष० । १ अङ्गस्य पुत्रः । तन्माता सुनीथा । **च०** १३ । १८ ॥ तस्य पट्टाभिषेकः । १४ । २–॥ तस्य ऋषिभिर्मारणम् । ३०–३४ ॥ तद्देहस्य मथनात्पृथोरर्चिषश्चोत्पत्तिः । **१५** । १–५ ॥

**वैकङ्कः** । मेरोः कर्णिकापर्वतः । **पं०** १६ । २६ ॥

**वैकारिकाहंकारः** । द्वि० ५ । २४ ॥ तदभिमानिदेवाः । ३० ॥ तृ० ५ । ३० ॥

**वैकारिकः सर्गः** । तृ० १० । १६ ॥

१ **वैकुण्ठः** । विकुण्ठायाः पुत्रो भगवान् । तत्पिता शुभ्रः । अ० ५ । ४ ॥

२ **वैकुण्ठः** । भगवल्लोकः । अ० ५ । ५ ॥ तद्वर्णनम् । द्वि० ९ । ९--१४ ॥ तृ० १५ । १२--॥ द० २८ । १४--१६ ॥ ८८ । २५--२६ ॥ तत्र सनकादीनां गमनम् । तृ० १५ । १२--॥ तत्स्थभगवद्रूपवर्णनम् । ३८--४५ ॥

**वैकृतसर्गः** । तृ० १० । ३ ॥

**वैखानसाः** । वानप्रस्थावान्तरभेदः । तृ० १२ । ४३ ॥

**वैतालः** । बह्वृच ऋषिः । जातूकर्ण्यस्य शिष्यः । द्वा० ६ । ५८ ॥

**वैदूर्यः** । मेरोः केसरपर्वतः । पं० १६ । २६ ॥

**वैदेहः** । जनकशब्दं पश्यत । तन्नामनिर्वचनम् । न० १३ । १३ ॥

**वैधृतः** । एकादशमन्वन्तरीय इन्द्रः । अ० १३ । २५ ॥

**वैधृतयः** । चतुर्थमन्तरीया देवाः । अ० १ । २९ ॥

**वैधृता** । आर्यकस्य भार्या । तत्पुत्रो धर्मसेतुनामा भगवदवतारः । अ० १३ । २६ ॥

**[वै]भ्राजकः** । मेरुपर्वतस्थो ह्रदः । पं० १६ । १४ ॥

**[वै]राजः** । अजितनाम्नो भगवतः पिता । तद्भार्या संभूतिः । अ० ५ । ९ ॥

**[वै]वस्वतः** । विवस्वतः पुत्रः श्राद्धदेवनामा सप्तमो मनुः । विशेषं श्राद्धदेवशब्दे पश्यत । प्र० ३ । १५ ॥

**[वै]वस्वतमन्वन्तरम्** । सप्तममन्वन्तरशब्दं पश्यत ॥

**[वै]शम्पायनः** । निगदाख्ययजुर्वेदवित् व्यासशिष्यः । प्र० ४ । २१ ॥ द्वा० ६ । ५२ ॥ तस्य ब्रह्महत्याप्राप्तिः तच्छिष्यैः चरकाध्वर्युभिस्तद्ब्रह्महत्यापरिहारार्थं व्रताचरणं च । ६१ ॥ तस्य तच्छिष्याय याज्ञवल्क्याय कोपः । ६३ ॥ तस्य पौराणिकत्वम् । ७ । ५ ॥

**वैशाखमासः** । माधवमासः । द्वा० ११ । ३४ ॥

**वैश्यः** । तृतीयो वर्णः । तद्वृत्तिः । न० ११ । १५ ॥ तल्लक्षणम् । २३ ॥ द० । २४ २०--२१ ॥ तत्प्रकृतिः । ए० १७ । १८ ॥

**वैश्रम्भकम्** । वनम् । तृ० २३ । ४० ॥

**वैश्वानरः** । दनुपुत्रोऽसुरः । तत्सुताः उपदानवी हिरण्याक्षस्य भार्या, क्रतोर्भार्या हयशिरा, कश्यपभार्ये पुलोमा कालका च । प० ६ । ३३--३४ ॥

**वैश्वानरमार्गः** । योगिनाम् । द्वि० २ । २४ ॥

**वैषम्याभावः** । भगवतः । स० १ । १--११ ॥

**वैष्णवज्वरः** । तेन माहेश्वरज्वरस्य पराजयः । द० ६३ । २३--३० ॥

**वैहायसी** । नदी । पं० १९ । १८ ॥

**व्यासः** । वेदव्यासशब्दं पश्यत ॥

**व्याहृतिः** । सवितुः पुत्री । तन्माता पृश्निः । प० १८ । १ ॥

१ **व्युष्टः** । पुष्पार्णस्य पुत्रः । तन्माता दोषा । तद्भार्या पुष्करिणी । तत्पुत्रः सर्वतेजाः । च० १३ । १४ ॥

२ **व्युष्टः** । विभावसुनामकवसोः पुत्रः । प० ६ । १६ ॥

१ **व्योमः** । क्ष० सो० वं० । दशार्हस्य पुत्रः । तत्पुत्रः जीमूतः । न० २४ । ३--४ ॥

२ **व्योमः** । कंसभृत्यः मयपुत्रोऽसुरः श्रीकृष्णेन हतः । द० ३७ । २७--३३ ॥

**व्रतः** । २ चक्षुषः पुत्रः । च० १३ । १६ ॥

**व्रतेयुः** । क्ष० सो० वं० । रौद्राश्वस्य पुत्रः । **न० २०** । ४ ॥

## श०

**शकटासुरवधः** । श्रीकृष्णेन । **द० ७** । ४--१७ ॥

**१ शकुनिः** । क्ष० सो० वं० । ३ दशरथस्य पुत्रः । तत्पुत्रः करंभिः । **न० २४** । ४--५ ॥

**२ शकुनिः** । हिरण्यकशिपोः पुत्रः । तत्पुत्रः भस्मासुरः । **स० २** । १८ ॥

**शकुन्तला** । मेनकायाः पुत्री विश्वामित्राज्जाता । दुष्यन्तस्य भार्या । तत्पुत्रो ३ भरतः । **न० २०** । १३--॥

**शक्तिः** । ऋ० । वसिष्ठस्य पुत्रः । तत्पुत्रः पराशरः । **च० १** । ४० ॥

**१ शङ्कुः** । क्ष० सो० वं० । उग्रसेनस्य पुत्रः । **न० २४** । २४ ॥

**२ शङ्कुः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । माता नाग्नजिती सत्या । **द० ६१** । १३ ॥

**शङ्कुशिराः** । दनुपुत्रोऽसुरः । **प० ६** । ३० ॥

**शङ्खः** । मेरोः केसरपर्वतः । **पं० १६** । २६ ॥

**शङ्खचूडः** । धनदानुचरो यक्षः । तद्वधः श्रीकृष्णेन । **द्वि० ७** । ३३ ॥ **द० ३४** । २५--३२ ॥

**शङ्खणः** । रघगणशब्दं पश्यत । **न० १२** । ३ ॥

**शङ्खोद्धरः** । क्षेत्रम् । **ए० ३०** । ६ ॥

**१ शतजित्** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता जाम्बवती । **द० ६१** । ११ ॥

**२ शतजित्** । क्ष० सो० वं० । १ सहस्रजितः पुत्रः । तत्पुत्राः । महाहयः वेणुहयः हैहयः इति त्रयः **न० २३** । २१ ॥

**३ शतजित्** २ विरजस्य पुत्रः । **पं० १५** । १५ ॥

**शतकेसरः** । शाकद्वीपस्थः पर्वतः । **पं० २०** । २६ ॥

**शतद्रुतिः** । समुद्रस्य पुत्री बर्हिषदो भार्या । **च० २४** । ११--॥

**शतद्रूः** । नदी । **पं० १९** । १८ ॥

**शतद्युम्नः** । क्ष० सू० वं० । २ भानुमतः पुत्रः । तत्पुत्रः शुचिः । **न० १३** । २१--२२ ॥

**१ शतधनुः** । क्ष० सो० वं० । हृदिकस्य पुत्रः । **न० २४** । २७ ॥ तेन सत्राजितो वधः । **द० ५७** । ३--६ ॥ तस्य वधः श्रीकृष्णेन । २१ ॥ **द्वि० ७** । ४४ ।

**२ शतधनुः** । (**शतधन्वा**) अष्टमो मौर्यः । **द्वा० १** । १५ ॥

**शतरूपा** । स्वायंभुवमनोः पत्नी । ब्रह्मणः कायादुत्पन्ना । विशेषं स्वायंभुवशब्दे पश्यत । **तृ० १२** । ५३ ॥

**शतवल्शः** । कुमुदपर्वतस्थो वटवृक्षः । **पं० १६** । २४ ॥

**शतशृङ्गः** । शाल्मलिद्वीपस्थः पर्वतः । **पं० २०** । १० ॥

**शताजित्** । क्ष० सो० वं० । भजमानस्य पुत्रः । **न० २४** । ८ ॥

**शतानन्दः** । ऋ० । गौतमस्य पुत्रः । तन्माता अहल्या । **न० २१** । ३४ ॥

**१ शतानीकः** । क्ष० सो० वं० । नकुलस्य पुत्रः । तन्माता द्रौपदी । **न० २२** । २९ ॥

**२ शतानीकः** । क्ष० सो० वं० । जनमेजयस्य पुत्रः । तत्पुत्रः सहस्रानीकः । **न० २२** । ३६--३९ ॥

**३ शतानीकः** । क्ष० सो० वं० । पाण्डववंशस्य सुदासस्य पुत्रः । तत्पुत्रः दुर्दमः । **न० २२** । ४३ ॥

**१ शत्रुघ्नः** । क्ष० सू० वं० । दशरथस्य पुत्रः । तन्माता सुमित्रा । न० १० । ३ ॥ तत्पुत्रौ सुबाहुः श्रुतकेतुश्च । ११ । १३ ॥ तेन मधोः पुत्रस्य लवणासुरस्य वधः । १४ ॥

**२ शत्रुघ्नः** । क्ष० सो० वं । श्वफल्कस्य पुत्रः । न० २४ । १७ ॥

**१ शत्रुजित्** । कश्चन यादवः । प्र० १४ । २९ ॥

**२ शत्रुजित्** । प्रतर्दनस्य नामान्तरम् । न० १७ । ६ ॥

**शनैश्चरः** । विवस्वतः छायादेव्यां जातः पुत्रः । प० ६ । ४१ ॥ अ० १३ । १० ॥ तन्मण्डलम् । पं० २२ । १६ ॥

**शन्तनुः** । (**शान्तनुः** ।) क्ष० सो० वं० । प्रतीपस्य पुत्रः । तन्नामनिर्वचनं च । न० २ । १२--१३ ॥ तस्य भार्या गङ्गादेवी । तत्पुत्रो भीष्मः । १९ ॥ तस्य द्वितीया भार्या दाशराजकन्या सत्यवती । तत्पुत्रौ चित्राङ्गदः विचित्रवीर्यश्च । २० । तेन कृपस्य कृप्याश्च बाल्ये पोषणम् । न० २१ । ३६ ॥

**शबलाश्वाः** । प्राचेतसदक्षस्य पुत्राः । तन्माता असिक्नी । तेषां कथा । प० ५ । २४--३३ ॥

**शब्दः** । आकाशगुणः । द्वि० ५ । २५--२७ ॥ तृ० ६ । १७ ॥ २६ । ३२--३३ ॥

**शमः** । बुद्धेर्भगवन्निष्ठताख्यो गुणः । प्र० १६ । २७ ॥ ए० १९ । ३६ ॥

**शमिः** । क्ष० सो० वं० । उशीनरस्य पुत्रः । न० २३ । ३ ॥

[१ **शमीकः** । ऋ० । तत्पुत्रः शृङ्गी । प्र० १८ ॥]

**२ शमीकः** । क्ष० सो० वं० । २ शूरस्य पुत्रः । न० २४ । १९ ॥ तद्भार्या सुदामिनी । तत्पुत्राः सुमित्रः अर्जुनपालः इत्यादयः । ४४ ॥

**१ शम्बरः** । दनुपुत्रोऽसुरः । प० ६ । ३० ॥ तेन रुक्मिणीपुत्रस्य शिशोः प्रद्युम्नस्य हरणम् । द० ५५ । ३ ॥ तस्य प्रद्युम्नेन वधः । १७--२४ ॥

**२ शम्बरः** । हिरण्यकशिपोः पुत्रः । स० २ । १८ ॥

**शम्भलग्रामः** । तत्र कल्क्यवतारः । द्वा० २ । १६--१८ ॥

**१ शम्भुः** । क्ष० सू० वं० । अम्बरीषस्य पुत्रः । न० ६ । १ ॥

**२ शम्भुः** । दशममन्वन्तरीय इन्द्रः । अ० १३ । २२ ॥

**शम्यापासः** । सरस्वत्याः पश्चिमतीरस्थः व्यासाश्रमभूतो बदरिकाश्रमः । प्र० ७ । २--३ ॥

**शरत्कालवर्णनम्** । द० २० । ३२--४९ ॥

**शरद्वान्** । ऋ० । सो० वं० । सत्यधृतेः पुत्रः । तत्पुत्रौ उर्वशीदर्शनात् शरस्तम्बे पतितात्तद्रेतसो जातौ कृपः कृपी च । न० २१ । ३५ ॥

**शर्करावर्ता** । नदी । पं० १९ । १८ ॥

**शर्मिष्ठा** । असुरराजस्य वृषपर्वणः पुत्री । ययातेर्भार्या । प० ६ । ३२ ॥ तस्या वनक्रीडा । न० १८ । ६--॥ तया देवयान्याः कूपे प्रक्षेपः । १७ ॥ तस्याः द्रुह्युः अनुः पूरुश्चेति पुत्रत्रयोत्पत्तिः । ३३ ॥

**शर्यातिः** । क्ष० सू० वं० । श्राद्धदेवनामकस्य वैवस्वतमनोः पुत्रः । अ० १३ । २ ॥ न० १ । १२ ॥ तत्पुत्री च्यवनऋषेर्भार्या सुकन्या । ३ । २ ॥ तस्य पुत्राः । उत्तानबर्हिः आनर्तः भूरिषेण इति त्रयः । २७ ॥

**शर्वरी** । दोषनामकवसोर्भार्या । तत्पुत्रः शिंशुमारः । **ष० ६** । १४ ॥

**१ शलः** । क्ष० सो० वं० । सोमदत्तस्य पुत्रः । **न० २२** । १८–१९ ॥ **प्र० १५** । १६ ॥

**२ शलः** । कंसभृत्यो मल्लः श्रीकृष्णेन हतः । **द० ४४** । २७ ॥

**शल्यः** । मद्रदेशाधिपः । **प्र० १५** । १५ ॥

**शशबिन्दुः** । क्ष० सो० वं० । ५ चित्ररथस्य पुत्रः । **न० २३** । ३१ ॥ तस्य महायोगी महाभोजः चतुर्दशमहारत्नः इति नामान्तराणि । ३२ ॥ तस्य दशसहस्रं भार्याः । दशलक्षसहस्राणि पुत्राः । तेषु प्रधानः पृथुश्रवाः । ३२--३३ ॥

**शशादः** । विकुक्षेर्नामान्तरम् ॥

**शाकद्वीपः** । दधिमण्डोदेनावृतः । तदधिपतिः मेधातिथिः । **पं० १** । ३२--३३ । **२०** । २४--२८ ॥

**शाकल्यः** । ऋ० । **द्वा० ६** । ५७॥

**शाक्यः** । क्ष० सू० वं० । **न० १२** । १४ ॥

**शातकौम्भी** । मेरुपर्वतस्था ब्रह्मणः सभा । **पं० १६** । २८ ॥

**शान्तम्** । प्लक्षद्वीपस्थं वर्षम् । पं० २० । ३ ॥

**शान्तरयः** । क्ष० सो० वं० । त्रिककुदः पुत्रः । **न० १७** । १२ ॥

**शान्ता** । २ दशरथस्य पुत्री । अङ्गराजेन रोमपादेन पुत्रीत्वेन स्वीकृता । ऋष्यशृङ्गऋषेर्भार्या । **न० २३** । ८ ॥

**१ शान्तिः** । कर्दमदेवहूत्योः पुत्री । अथर्वणो भार्या । तत्पुत्रो दध्यङ् । **तृ० २४** । २४ ॥ **च० १** । ४२ ॥

**२ शान्तिः** । तुषितेष्वन्यतमः । **च० १** । ७ ॥ तुषितशब्दंच पश्यत ॥

**३ शान्तिः** । दक्षप्रजापतेः पुत्री । धर्मप्रजापतेर्भार्या । तत्पुत्रः सुखम् । **च० १** । ५१ ॥

**४ शान्तिः** । क्ष० सो० वं० । नीलस्य पुत्रः । तत्पुत्रः सुशान्तिः । **न० २१** । ३०–३१ ॥

**५ शान्तिः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता कालिन्दी । **द० ६१** । १४ ॥

**६ शान्तिः** । अथर्ववेदविदृषिः । **द्वा० ७** । ४ ॥

**शान्तिदेवा** । देवकस्य पुत्री । वसुदेवस्य भार्या । **न० २४** । २३ ॥ तत्पुत्राः श्रमः प्रतिश्रुतः इत्याद्याः । ५० ॥

**शालः** । क्ष० सो० वं० । ६ वृकस्य पुत्रः । **न० २४** । ४३ ॥

**शालिशूकः** । षष्ठो मौर्यः । **द्वा० १** । १४ ॥

**शालीनम्** । वृत्तिः । **तृ० १२** । ४२ ॥

**शालीयः** । बह्वृच ऋषिः । शाकल्यस्य शिष्यः । **द्वा० ६** । ५७ ॥

**शाल्मलिद्वीपः** । सुरोदेन समुद्रेणावृतः । तदधिपतिः यज्ञबाहुः । **पं० १** । ३२--३३ ॥ **पं० २०** । ७--१२ ॥

**शाल्वः** । क्ष० । शल्वदेशाधिपो राजा तस्य रुद्रात्सौभविमानप्राप्तिः । तेन द्वारकानिरोधः । तस्य श्रीकृष्णेन वधः । **द० ७७** । १०- ३७ ॥

**शावस्तः** । क्ष० सू० वं० । १ युवनाश्वस्य पुत्रः । तत्पुत्रः बृहदश्वः । सः शावस्तीनामकपुर्या निर्माता । **न० ६** । २१ ॥

**शावस्ती** । शावस्तेन निर्मिता पुरी । **न० ६** । २१ ॥

**शिंशुमारः** । शिशुमारशब्दं पश्यत ॥

**शिखण्डिनी** । अन्तर्धानस्य भार्या । तत्पुत्राः पावकः पवमानः शुचिश्च । **च० २४ । ३ ॥**

**१ शिनिः** । क्ष० सो० वं० । पूरुवंशोद्भवस्य ब्राह्मणस्य गर्गस्य पुत्रः । तत्पुत्रो गार्ग्यः । **न० २१** । १९ ॥

**२ शिनिः** । क्ष० सो० वं० । युधाजितः पुत्रः । तत्पुत्रः अनमित्रः । **न० २४ । १२ ॥**

**३ शिनिः** । क्ष० सो० वं० । अनमित्रस्य पुत्रः । तत्पुत्रः (युयुधानः) सत्यकः । **न० २४** । १३ ॥

**४ शिनिः** । क्ष० सो० वं० । भजमानस्य पुत्रः । तत्पुत्रः स्वयंभोजः । **न० २४** । २६ ॥

**शिनीवासः** । मेरोः केसरपर्वतः । **पं० १६** । २६ ॥

**१ शिबिः** । २ चक्षुषः पुत्रः । माता नड्वला । **च० १३** । १६ ॥

**२ शिबिः** । क्ष० सो० वं० । उशीनरस्य पुत्रः । तत्पुत्राः वृषादर्भः १ सुवीरः मद्रः केकयः इति चत्वारः । **न० २३** । ३ ॥ **प्र० १२** । २० ॥ **द्वि० ७** । ४ ॥

**शिलोञ्छम्** । वृत्तिः । **तृ० १२** । ४२ ॥

**शिल्पम्** । **तृ० २३** । १२–२२ ॥

**शिवम्** । कला । प्लक्षद्वीपस्थं वर्षम् । **पं० २०** । ३ ॥

**१ शिशिरः** । मेरोः केसरपर्वतः । **पं० १६** । २६ ॥

**२ शिशिरः** । बह्वृचः ऋषिः । शाकल्यस्य शिष्यः । **द्वा० ६** । ५७ ॥

**शिशुत्वावस्था** । तद्दुःखम् । **तृ० ३१** । २४–२७ ॥

**शिशुनन्दिः** । राजा । **द्वा० १** । ३३ ॥

**शिशुनागः** । नन्दिवर्धनपुत्रो मगधराजः । **द्वा० १** । ५ ॥

**शिशुपालः** । क्ष० सो० वं० । चैद्यस्य दमघोषस्य पुत्रः । तन्माता वसुदेवभगिनी श्रुतश्रवाः । **न० २४** । ३९–॥ तद्वधः श्रीकृष्णेन । **द० ७४** । ४३ ॥ तस्य भगवतः सायुज्यप्राप्तिः । **स० १** । १३–॥ तस्य पूर्वजन्मनि भगवत्पार्षदत्वम् । ३५–४६ ॥

**शिशुमारः । शिंशुमारः** । दोषनामकवसोः पुत्रः प्रजापतिः । तन्माता शर्वरी । **ष० ६** । १४ ॥ तत्पुत्री ध्रुवस्य भार्या भ्रमिः । **च० १०** । १ ॥

**शिशुमारचक्रम्** । **द्वि० २** । २३–२५ ॥ **पं० २३** । ४–९ ॥

**शिश्नम्** । प्रजननेन्द्रियम् । तदुत्पत्तिः तदभिमानिदेवता च । **द्वि० ६** । ८ ॥ १० । २६ ॥ **तृ० ६** । १९ ॥ **१२** । २६ ॥

**शीघ्रः** । क्ष० सू० वं० । अग्निवर्णस्य पुत्रः । तत्पुत्रो मरुः । **न० १२** । ५ ॥

**शीलम्** । गुणः **प्र० १६** । २९ ॥

**शुकः** । व्यासपुत्रः । तत्स्तुतिः । **प्र० २** । २–३ ॥ ४ । ४–८ ॥ तद्गमनं २ परीक्षिद्राजसमीपे तद्रूपवर्णनं च । १९ । २५–२८ ॥ तत्कृता भगवत्स्तुतिः । **द्वि० ४** । १२–२४ ॥ तत्पुत्री नीपस्य भार्या कृत्वी । **न० २१** । २५ ॥ तस्मै व्यासेन भागवताध्यापनम् । **प्र० ७** ॥ तस्य स्त्रीपुंभिदाभावः । **प्र० ४** । ५ ॥ अत्रेदं तत्त्वम्— नेयं कृत्वी साक्षाच्छुकाचार्यस्य पुत्री किंतु तच्छायायाः इति पुराणान्तरे ॥

**शुक्तिमान** । पर्वतः । **पं० १९** । १६ ॥

**शुक्रः** । उशना । २ कवेः पुत्रः । नवग्रहेष्वन्यतमः । तन्मण्डलम् । **पं० २२** । १२–१३ । तद्भार्या

प्रियव्रतराजपुत्री ऊर्जस्वती। तत्पुत्री देवयानी । १ । २४ । ३४ ॥ असुराणां पुरोहितः । पुत्रौ शण्डामर्कौ । स० ५ । १ ॥ तेन महाबलिं प्रति वामनाय भूदाननिषेधः । अ० । १९ । ३०-॥

**शुक्रमण्डलम्** । पं० २२ । १२ ॥

**शुक्रमासः** । ज्येष्ठमासः । द्वा० ११ । ३५ ॥

**१ शुक्लः** । हविर्धानस्य पुत्रः । माता हविर्धानी । च० २४ । ८ ॥

**२ शुक्लः** । क्रौञ्चद्वीपस्थः पर्वतः । पं० २० । २१ ॥

**शुक्ला** । क्रौञ्चद्वीपस्था नदी । पं० २० । २१ ॥

**शुङ्गाः** । तन्नामानो राजानः । द्वा० १ । १६-१८ ॥

**१ शुचिः** । चतुर्दशमन्वन्तरीय इन्द्रः । अ० १३ । ३४ ॥

**२ शुचिः** । प्रधानाग्निपुत्रः । च० १ । ६० । २४ । ४ ॥

**३ शुचिः** । क्ष० सू० वं० । शतद्युम्नस्य पुत्रः । तत्पुत्रः सनद्वाजः । न० १३ । २१--२२ ॥

**४ शुचिः** । क्ष० सो० वं० । शुद्धस्य पुत्रः । तत्पुत्रः त्रिककुत् । न० १७ । ११ ॥

**५ शुचिः** । क्ष० सो० वं० । विप्रस्य पुत्रः । तत्पुत्रः क्षेमः । न० २२ । ४७ ॥

**६ शुचिः** । क्ष० सो० वं० । १ अन्धकस्य पुत्रः । न० २४ । १९ ॥

**७ शुचिः** । आषाढमासः । द्वा० ११ । ३६ ॥

**शुद्धः** । क्ष० सो० वं० । २ अनेनसः पुत्रः । तत्पुत्रः ४ शुचिः । न० १७ । ११ ॥

**शुद्ध्यशुद्धिकथनम्** । ए० २१ । १०-॥

**१ शुद्धोदः** । क्ष० सू० वं० । न० १२ । १४ ॥

**२ शुद्धोदः** । सप्तसमुद्रेष्वन्यतमः । पं० १ । ३३ ॥

**१ शुनकः** । क्ष० सू० वं० । २ ऋतस्य पुत्रः । तत्पुत्रः वीतहव्यः । न० १३ । २६ ॥

**२ शुनकः** । क्ष० सू० वं० । ब्राह्मणस्य गृत्समदस्य पुत्रः । तत्पुत्रः शौनकः । न० १७ । ३ ॥

**३ शुनकः** । ऋ० । अथर्ववित्पथ्यस्य शिष्यः । तस्य अङ्गिरा इति नामान्तरम् । तच्छिष्यौ बभ्रुः सैन्धवायनश्च । द्वा० ७ । २--३ ॥

**४ शुनकः** । पुरञ्जयस्य अमात्यः । द्वा० १ । २ ॥

**शुनःशेपः** । ऋ० । अजीगर्तस्य पुत्रः । तं पशुं कृत्वा हरिश्चन्द्रेण वरुणमुद्दिश्य यजनम् ॥ न० ७ । २१ ॥ विश्वामित्रेण तस्य स्वपुत्रत्वेन स्वीकारः । न० १६ । ३० ॥

**शुभः** । धर्मप्रजापतिपुत्रः । तन्माता श्रद्धा । च० १ । ५० ॥

**शुभ्रः** । विकुण्ठाया भर्ता । तत्पुत्रो वैकुण्ठो भगवान् । अ० ५ । ४ ॥

**शुशुमारचक्रम्** । शिशुमारशब्दं पश्यत ॥

**शूद्रः** । चतुर्थवर्णः । तस्य लक्षणम् । स० ११ । २४ ॥ तद्धर्माः वृत्तिश्च । स० ११ । १५ ॥ ए० १७ । १९ ॥

**शून्यबन्धुः** । क्ष० सू० वं० । तृणबिन्दोः पुत्रः । न० २ । ३३ ॥

**१ शूरः** । क्ष० सो० वं० । १ विदूरथस्य पुत्रः । तत्पुत्रा २ भजमानः । न० २४ । २६ ॥

**२ शूरः** । क्ष० सो० वं० । २ देवमीढस्य पुत्रः । तद्भार्या मारिषा । तत्पुत्रा वसुदेवाद्या दश । न० २४ । २७-२८ ॥ तस्य पुत्र्यः पृथा श्रुतदेवा श्रुतकीर्तिः श्रुतश्रवाः राजाधिदेवीचेति पञ्च । न० २४ । ३०-३१ ॥

**३ शूरः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता मदिरा । **न०** २४ । ४८ ॥

**शूरभूः** । (**शूरभूमिः**) उग्रसेनस्य पुत्री । **न०** २४ । २५ ॥ वसुदेवभ्रातुः श्यामकस्य भार्या । तत्पुत्रौ हिरण्यकेशः हिरण्याक्षश्च । ४२ ॥

**शूरसेनः** । क्ष० सो० वं० । कार्तवीर्यार्जुनस्य पुत्रः । **न०** २३ । २७ ॥ **द०** १ । २७ ॥

**शूरसेनाः** । देशः । **प्र०** १० । ३४ ॥

**शूर्पणखा** । राक्षसी । तस्या विरूपकरणम् । **न०** १० । ४ । ९ ॥

**शूर्पारकः** । क्षेत्रविशेषः । **द०** ७९ । २० ॥

**शूलप्रोतः** । नरकः । **प०** २६ । ७ । ३२ ॥

**शृङ्गवान्** । मर्यादागिरिः । **पं०** १६ । ८ ॥

[**शृङ्गी** । ऋषिः । शमीकस्य पुत्रः । नेन २ परीक्षिते तक्षकदंशेन म्रियतामिति शापदानम् । **प्र०** १८ । ३२--३७ । यद्यप्यत्र "**शृङ्गी**" इति स्पष्टं नाम नास्ति तथाऽपि महाभारतमनुसृत्यात्र लिखितम् ॥]

**शेषः** । आदिशेषशब्दं पश्यत ॥

**शैनेयः** । सात्यकिः । **प्र०** ८ । ७ ॥

**शोणः** । नदः । **पं०** १९ । १८ ॥ **द०** ७९ । ११ ॥

**शोणितपुरम्** । बाणासुरस्य पुरम् । **द०** ६२ । ४ ॥

**शौल्कायनिः** । अथर्ववित् ऋषिः । वेददर्शस्य शिष्यः । **द्वा०** ७ । २ ॥

**शौचम्** । गुणः । **प्र०** १६ । २७ ॥ १७ । २४ । ४२ ॥ **ए०** १९ । ३८ ॥

१ **शौनकः** । नैमिशारण्यवासी कुलपतिः ऋषिः । **प्र०** १ । ४ ॥ तेन सूतं प्रति भागवतकथाकथनप्रश्नः । ४ । १-२ ॥ नेन २ परीक्षित्कथाकथनप्रार्थना । ९ ॥ सः मार्कण्डेयकुलोत्पन्नः । **द्वा०** ८ । ३ ॥

२ **शौनकः** । क्ष० सो० वं० । २ शुनकस्य पुत्रः । **न०** १७ । ३ ॥

**शौर्यम्** । गुणः । **प्र०** १६ । २७ ॥ **ए०** १९ । ३७ ॥

**श्यामकः** । क्ष० सो० वं० । २ शूरस्य पुत्रः । **न०** २४ । २९ ॥ तद्भार्या उग्रसेनस्य पुत्री शूरभूमिः । तत्पुत्रौ हरिकेशः हिरण्याक्षश्च । **न०** २४ । ४२ ॥

**श्यामा** । मेरोः पुत्री । आग्नीध्रपुत्रस्य हिरण्मयस्य भार्या । **पं०** २ । १९--२३ ॥

१ **श्रद्धा** । श्राद्धदेवनामकस्य वैवस्वतमनोर्भार्या । **न०** १ । १४ ॥

२ **श्रद्धा** । कर्दमप्रजापतिपुत्री । तन्माता देवहूतिः । १ अङ्गिरसो भार्या । **तृ०** २४ । २२ ॥ तत्पुत्र्यः १सिनीवाली कुहूः राका अनुमतिश्चेति चतस्रः । **च०** १ । ३४ ॥ तत्पुत्रौ उचथ्यो बृहस्पतिश्चेति द्वौ । **च०** १ । ३५ ॥

३ **श्रद्धा** । २ दक्षपुत्री धर्मप्रजापतेः पत्नी । तत्पुत्रः शुभः । **च०** १ । ५० ॥

**श्रमः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता शान्तिदेवा । **न०** २४ । ५० ॥

**श्रवणः** । नरकासुरपक्षीयोऽसुरः । **द०** ५९ । १२ ॥

**श्राद्धदेवः** । वैवस्वतनामा सप्तमो मनुः । विवस्वतः पुत्रः तन्माता संज्ञा । **ष०** ६ । ४० ॥ तत्पुत्रा इक्ष्वाकुप्रभृतयो दश । **अ०** १३ । २--३ ॥ **न०** १ । ११--१२ ॥ तस्य पुत्रोत्पत्तिकथा । २ । २ ॥ मित्रावरुणेष्ट्या तस्य इलोत्पत्तिकथा । १ । १३--१६ ॥

**श्राद्धप्रकरणम्** । स० १४ । १९--२५ ॥ १५ । २--७ ॥

**श्रावणमासः** । नभोमासः । द्वा० ११ । ३७ ॥

**श्रीः** । महालक्ष्मीः । भृगोः पुत्री । तन्माता ख्यातिः । च० १ । ४३ ॥ तया जयविजयाभ्यां शापदानम् । तृ० १६ । ३० ॥ तस्याः क्षीरसागरादुत्पत्तिः । अ० ८ । ८ ॥ तस्या अभिषेकः । १०--१७ ॥ तया श्रीमतो नारायणस्य कण्ठे मालाप्रक्षेपपुरस्सरं वरणम् । २४ ॥ तया भगवतः सेवाप्रकारः । तृ० १५ । २१--२२ ॥ तया भगवत्स्तुतिः । पं०१८ । १८--२३ ॥

**श्रीदामा** । गोपालः । द० १५ । २० ॥

**श्रीदेवा** । वसुदेवस्य भार्या । न० २४ । २३ ॥ तत्पुत्राः वसुः हंसः सुवंशः इत्याद्याः । ५१ ॥

**श्रीभानुः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता सत्यभामा । द० ६१ । ११ ॥

**श्रीरङ्गम्** । रङ्गक्षेत्रम् । द० ७९ । १४ ॥

**श्रीशान्तकर्णः** । आन्ध्रराजः । द्वा० १ । २३ ॥

**श्रीशैलः** । पर्वतः । पं० १९ । १६ ॥ द० ७९ । १३ ॥

**१ श्रुतः** । क्ष० सू० वं० । भगीरथस्य पुत्रः । तत्पुत्रो नाभः । न० ९ । १६ ॥

**२ श्रुतः** । क्ष० सू० वं० । सुभाषणस्य पुत्रः । तत्पुत्रः ४ जयः । न० १३ । २५ ॥

**३ श्रुतः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता कालिन्दी । द० ६१ । १४ ॥

**श्रुतकर्मा** । क्ष० सो० वं० । ४ सहदेवस्य पुत्रः । तन्माता द्रौपदी । न० २२ । ३० ॥

**१ श्रुतकीर्तिः** । २ शूरस्य पुत्री । वसुदेवस्य भगिनी । न० २४ । ३० ॥ कैकयस्य धृष्टकेतोर्भार्या । तत्पुत्राः संतर्दनादयः पञ्च । पुत्री श्रीकृष्णस्य भार्या भद्रा । ३८ ॥

**२ श्रुतकीर्तिः** । क्ष० सो० वं० । १ अर्जुनस्य पुत्रः । तन्माता द्रौपदी । न० २२ । २९ ॥

**श्रुतञ्जयः** । क्ष० सो० वं० । सत्यायोः पुत्रः । न० १५ । २ ॥

**१ श्रुतदेवः** । यादवः । प्र० १४ । ३२ ॥

**२ श्रुतदेवः** । भगवत्पार्षदः । अ० २१ । १७ ॥

**३ श्रुतदेवः** । सिद्धेशः । प० १५ । १५ ॥

**४ श्रुतदेवः** । मिथिलास्थो ब्राह्मणः । तद्गृहगमनं श्रीकृष्णस्य । द० ८६ ॥ तत्कृता भगवत्स्तुतिः । ४४--४८ ॥ द्वि० ७ । ४५ ॥

**श्रुतदेवा** । २ शूरस्य पुत्री । न० २४ । ३० ॥ कारूषस्य वृद्धशर्मणो भार्या । तत्पुत्रो दन्तवक्रः । ३७ ॥

**श्रुतधराः** । शाल्मलिद्वीपस्थाः पुरुषाः । पं० २० । ११ ॥

**श्रुतविन्दा** । कुशद्वीपस्था नदी । पं० २० । १५ ॥

**१ श्रुतश्रवाः** । क्ष० सो० वं० । सोमापेः पुत्रः । न० २२ । ९ ॥

**२ श्रुतश्रवाः** । क्ष० सो० वं० । मार्जारेः पुत्रः । तत्पुत्रः अयुतायुः । न० २२ । ४६ ॥

**३ श्रुतश्रवाः** । २ शूरस्य पुत्री । वसुदेवस्य भगिनी । न० २४ । ३० ॥ चेदिराजस्य दमघोषस्य भार्या । तत्पुत्रः शिशुपालः । ३९--४० ॥

**१ श्रुतसेनः** । क्ष० सू० वं० । दाशरथेः शत्रुघ्नस्य पुत्रः । न० ११ । १३ ॥

**२ श्रुतसेनः** । क्ष० सो० वं० । पाण्डवस्य भीमसेनस्य पुत्रः । तन्माता द्रौपदी । **न० २२** । २९ ॥

**३ श्रुतसेनः** । क्ष० सो० वं० । २ परीक्षितः पुत्रः । **न० २२** । ३५ ॥

**४ श्रुतसेनः** । श्रीकृष्णानुचर । **प्र० १४** । ३२ ॥

**१ श्रुतायुः** । क्ष० सू० वं० । १ अरिष्टनेमिन पुत्र । तत्पुत्र सुपार्श्वक । **न० १३** । २३ ॥

**२ श्रुतायुः** । क्ष० सू० वं० । पुरूरवस पुत्र । तन्माता उर्वशी । तत्पुत्र वसुमान् । **न० १५** । १--२ ॥

**श्रुतिगीता** । भगवन्तं प्रति । **द० ८७** ॥

**श्रोत्रम्** । श्रोत्रेन्द्रियम् । तदुत्पत्ति तदभिमानिदेवता च । **तृ० ६** । ३–१७ ॥ **२६** । ३२ । ४७ ॥ **द्वि० ६** । ३ ॥ **१०** । २२ ॥

**श्वफल्कः** । क्ष० सो० वं० । २ वृष्णेः पुत्र । तद्भार्या गान्दिनी । तत्पुत्रा अक्रूरादयो द्वादश । **न० २४** । १५ ॥ तत्पुत्री सुचीरा । १७ ॥

**श्वासनिरोधः** । प्राणायामः । **द्वि० २** । १५ ॥

**श्वाहिः** । क्ष० सो० वं० । वृजिनवत पुत्र । तत्पुत्र रुशेकुः । **न० २३** । ३१ ॥

**श्वेतः** । रम्यकहिरण्मययो प्रागायतो मर्यादागिरि । **पं० १६** । ८ ॥

**श्वेतता** । अनूर्मिमत्त्वशब्दं पश्यत ॥

## ष०

**षष्ठं मन्वन्तरम्** । चाक्षुषमन्वन्तरम् । **अ० ५** । ७--९ । तदधिपतिश्चाक्षुषः । तत्पुत्राः पूरुपूरुषादय । इन्द्रो मन्त्रद्रुमः । आप्यादयो देवाः । हविष्यन्दादयः सप्त ऋषयः । क्षीरोदमथनकर्ता अजितो नाम भगवान् ॥

**षोडशसहस्रमहिष्यः** । श्रीकृष्णेन तासां परिणयः । **द० ५९** । ३३--४३ ॥ **८३** । ४०–४३ ॥ **तृ० ३** । ७ ॥

## स०

**संज्ञा** । विवस्वतो भार्या । तत्पुत्राः श्राद्धदेवनामा वैवस्वतमनु यम. यमी च । तस्या एव वडवारूपधारिण्या पुत्रौ नासत्यौ । **ष० ६** । ४० ॥ सा विश्वकर्मण पुत्री । **अ० १३** । ८ ॥

**संन्यासः** । चतुर्थ आश्रम । **ए० १९** । ३८ ॥

**संन्यासिधर्माः** । **स० १२** । ६--१० ॥ **१३** । १--२४ ॥ **प्र० १८** । २२ ॥ **तृ० २१** । ३१ ॥ **२२** । १९–२० ॥ **ए० १८** । १२--२७ ॥ तद्वान्तरभेदा ; कुटीचकादय । **तृ० १२** । ४३॰॥

**संयमः** । क्ष० सू० वं० । १ धूम्राक्षस्य पुत्र । तत्पुत्र कृशाश्व । **न० २** । ३४ ॥

**१ संयातिः** । क्ष० सो० वं० । नहुषस्य पुत्र. **न० १८** । १ ॥

**२ संयातिः** । क्ष० सो० वं० । बहुगवस्य पुत्र । तत्पुत्रः अहंयाति । **न० २०** । ३ ॥

**संवरणः** । क्ष० सो० वं० । २ ऋक्षस्य पुत्र । तन्माता रथंतरी । **न० २२** । ४ । तद्भार्या सूर्यपुत्री तपती । तत्पुत्र कुरु । **ष० ६** । ४१ ॥

**संवत्सरः** । वत्सरशब्दं पश्यत ॥

**संवत्सरचक्रम्** । **पं० २१** । १३ ॥

**संसारः** । संसृतिः । तद्दुःखनिरूपणम् । **तृ० ३०** । १–४० ॥

**संसाराटवी** । संसारस्य अटवीत्वेन वर्णनं जडभरतेन **पं० १३–१४** ॥

**संह्रादः** । असुरः । हिरण्यकशिपोः पुत्रः । तद्भार्या कृतिः । तत्पुत्रः पञ्चजनः । **ष० १८** । १३–१४ ॥

**सगरः** । क्ष० सू० वं० । बाहुकस्य पुत्रः । **न० ८** । ४ ॥ तस्य गुरुः और्वः । तत्कृताश्वमेधे इन्द्रेण यज्ञीयाश्वस्य हरणम् । ८ ॥ तत्पुत्रैः खातानां द्वीपानां नामानि । **पं० १९** । २९–३० ॥ **द्वि० ७** । ४४ ॥

**सङ्कटः** । धर्मस्य पुत्रः । माता ककुप् । तत्पुत्रः कीकटः **ष० ६** । ६ ॥

**१ सङ्कर्षणः** । भगवतस्तामसी मूर्तिः । तत्स्तुतिः रुद्रेण । **पं० १७** । १६–२४ ॥ **ष० १६** । २९–३३ ॥ तन्नामनिर्वचनम् । **द० २** । १३ ॥ **पं० १६** । ३४–४८ ॥ **तृ० ८** । ४–६ ॥ **द० ३९** । ४४–४५ ॥ तत्स्वरूपकथनम् । **पं० २५** । १–१३ ॥

**२ सङ्कर्षणः** । क्ष० सो० वं । वसुदेवस्य पुत्रो बलरामः । तन्माता देवकी । **न० २४** । ५४ ॥

**३ सङ्कर्षणः** । आदिशेषशब्दं पश्यत ॥

**सङ्कल्पः** । धर्मस्य पुत्रः । तन्माता संकल्पा । तत्पुत्रः कामः । **ष० ६** । १० ॥

**सङ्कल्पा** । दक्षप्रजापतिपुत्री । धर्मप्रजापतेर्भार्या । तत्पुत्रः संकल्पः । **ष० ६** । १० ॥

**१ सङ्कृतिः** । क्ष० सो० वं० । जयसेनस्य पुत्रः । तत्पुत्रः २ जयः । **न० १७** । १७–१८ ॥

**२ सङ्कृतिः** । क्ष० सो० वं० । नरस्य पुत्रः । तत्पुत्रौ गुरुः रन्तिदेवश्च । **न० २१** । १–२ ॥

**सङ्गः** । अधर्मपादः । **प्र० १७** । २४ ॥

**सङ्गतः** । पञ्चमो मौर्यः । **द्वा० १** । १४ ॥

**सङ्ग्रामजित्** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता भद्रा । **द० ६१** । १७ ॥

**१ सञ्जयः** । क्ष० सू० वं० । रणञ्जयस्य पुत्रः । न० १२ । १३ ॥

**२ सञ्जयः** । धृतराष्ट्रस्य सूतो मन्त्री च । गवल्गणस्य पुत्रः । **प्र० १३** । ३१ । ३६ ॥

**३ सञ्जयः** । क्ष० सो० वं० । क्षत्रवृद्धस्य पुत्रः । तत्पुत्रः १ जयः । **न० १७** । १६ ॥

**४ सञ्जयः** । क्ष० सो० वं० । भर्म्याश्वस्य पुत्रः । **न० २१** । ३२ ॥

**१ सती** । स्वायंभुवदक्षस्य पुत्री । तन्माता प्रसूतिः । रुद्रस्य पत्नी । च० । १ । १ । ४७ । ६५ ॥ तस्याः कथा । **च० २** ॥ तया दक्षस्य बृहस्पतिसवं प्रति गन्तुं रुद्रप्रार्थना । **३** । ८–१४ ॥ तस्याः स्वपितुर्यज्ञं प्रति गमनम । **४** । ३ ॥ अरुद्रयज्ञकारिणः स्वपितुर्निन्दनं शरीरत्यागश्च ९–२७ ॥ तया पुनः हिमवतो भार्यायां मेनायां जननादिकथा । ७ । ५८–६५ ॥

**२ सती** । प्राचेतसदक्षस्य पुत्री अङ्गिरः । प्रजापतेर्भार्या । तत्पुत्रः अथर्वाङ्गिरसः । **ष० ६** । ४ । ९ ॥

**१ सत्यम्** । सप्तम ऊर्ध्वलोकः । **द्वि० १** । २८ ॥ ५ । ३९ ॥ तस्य ब्रह्मलोक इति नामान्तरम् ॥

**२ सत्यम्** । अवितथं वचनम् । **प्र० १६** । २७ ॥ **१७** । २४ **द्वि० ७** । १८ ॥ **अ० २०** । ४ । **ए० १९** । ३७ ॥

**सत्कर्मा** । क्ष० सो० वं० । धृतव्रतस्य पुत्रः । तत्पुत्रः अधिरथः । न० २३ । १२ ॥

**१ सत्यः** । क्ष० हविर्धानस्य पुत्रः । च० २४ । ८ ॥

**२ सत्यः** । दशममन्वन्तरीय ऋषिः । अ० १३ । २२ ॥

**सत्यकः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता भद्रा । द० ६१ । ७ ॥

**सत्यकः** । क्ष० सो० वं । ३ शिनेः पुत्रः । तत्पुत्रः युयुधानः । न० २४ । १३–१४ ॥

**सत्यकाः** । चतुर्थमन्वन्तरीया देवाः । अ० १ । २८ ॥

**सत्यकेतुः** । क्ष० सो० वं० । धर्मकेतोः पुत्रः । तत्पुत्रः २ धृष्टकेतुः । न० १७ । ८--९ ॥

**१ सत्यजित्** । क्ष० सो० वं० । आनकस्य पुत्रः । तन्माता कङ्का । न० २४ । ४१ ॥

**२ सत्यजित्** । तृतीयमन्वन्तरीय इन्द्रः । अ० १ । २४ ॥

**३ सत्यजित्** । क्ष० सो० वं० । सुनीथस्य पुत्रः । तत्पुत्रः विश्वजित् । न० २२ । ४९ ॥

**सत्यधर्मा** । धर्मसावर्णेः पुत्रः । अ० १३ । २४ ॥

**१ सत्यधृतिः** । क्ष० सो० वं० । कृतिमतः पुत्रः । तत्पुत्रः दृढनेमिः । न० २१ । २७ ॥

**२ सत्यधृतिः** । क्ष० सो० वं० । २ दिवोदासस्य पुत्रः । तत्पुत्रः शरद्वान् । न० २१ । ३५ ॥

**सत्यभामा** । सत्राजितः पुत्री । श्रीकृष्णस्य भार्या तस्या विवाहः । द० ५६ । ४४ ॥ ८३ । ९ ॥ तस्याः पुत्राः । ६१ । १०–११ ॥

**सत्यम्भरा** । प्लक्षद्वीपस्था नदी । पं० २० । ४ ॥

**सत्यरथः** । क्ष० सू० वं० । समरथस्य पुत्रः । तत्पुत्रः उपगुरुः । न० १३ । २४ ॥

**१ सत्यवती** । वेदव्यासस्य माता । प्र० ३ । २१ । वासवी । प्र० ४ । १४ । द्वि० ७ । ३६ ॥

**२ सत्यवती** । गाधिराजस्य पुत्री । ऋचीकस्य भार्या । न० १५ । ५ ॥

**सत्यवान्** । २ चक्षुषः पुत्रः । च० १३ । १६ ॥

**१ सत्यव्रतः** । क्ष० सू० वं० । त्रिबन्धनस्य पुत्रः । स एव त्रिशङ्कुः । न० ७ । ५ ॥

**२ सत्यव्रतः** । राजर्षिः । अ० २४ । १० ॥ स एवापरस्मिञ्जन्मनि श्राद्धदेवो मनुरभवत् । ११ ॥ तस्य कृतमालानदीतीरे तपश्चरणम । १२ ॥ तेन मत्स्यरूपिणो भगवतः स्तुतिः । ४६--५३ ॥

**सत्यव्रताः** । धर्मस्य पुत्राः । भगवदवतारस्य सत्यसेनस्य भ्रातरः । अ० १ । २५ ॥

**सत्यश्रवाः** । क्ष० सू० वं० । वीतिहोत्रस्य पुत्रः । तत्पुत्र उरुश्रवाः । न० २ । २० ॥

**सत्यसहाः** । स्वधामाख्यस्य भगवदवतारस्य पिता । अ० १३ । २९ ॥

**सत्यसेनः** । धर्मप्रजापतेः पुत्रः । तन्माता सूनृता । अ० १ । २५ ॥

**सत्यहितः** । क्ष० सो० वं० । ७ ऋषभस्य पुत्रः । तत्पुत्रः पुष्पवान् । न० २२ । ७ ॥

**१ सत्या** । मन्थोर्भार्या । तत्पुत्रः भौवनः । पं० १५ । १५ ॥

**२ सत्या** । (नीला) । कौसल्यस्य नग्नजितः पुत्री (नाग्नजिती) । श्रीकृष्णस्य महिषी । द० ५८ । ३२ ॥ ८३ । १३--१४ ॥ तस्याः पुत्राः । ६१ । १३ ॥ प्र० १४ । ३७ ॥ तृ० ३ । ४ ॥

**सत्याः** । तृतीयमन्वन्तरीया देवाः । अ० १ । २४॥

**सत्यायुः** । क्ष० सो० वं० । पुरूरवसः पुत्रः । तन्माता उर्वशी । न० । १५ । १--२ ॥

**सत्येयुः** । क्ष० सो० वं० रौद्राश्वस्य पुत्रः । न० २० । ४ ॥

**सत्राजित्** । (**सत्राजितः** ।) क्ष० सो० वं० । निम्नस्य पुत्रः । न० २४ । १२--१३ ॥ तत्पुत्री सत्यभामा श्रीकृष्णस्य महिषी । द० ५६ । १ ॥ सूर्यात् स्यमन्तकमणेः प्राप्तिः । द० ५६ । १--३ ॥ तेन स्वपुत्र्याः श्रीकृष्णाय प्रदानम् । ४३ ॥ तस्य शतधन्वना वधः । ५७ । ३--६ ॥

**सत्रायणः** । भगवदवतारस्य बृहद्भानोः पिता । तद्भार्या १ विनता । अ० १३ । ३५ ॥

**सत्त्वम्** । गुणः । प्र० २ । २३ ॥ १३ । ५३ ॥ द्वि० ५ । १८ ॥ ६ । १२ ॥ तृ० ६ । २६॥

**सत्सङ्गमहिमा** । ए० १२ । २६ ॥

**सदसत्** । द्वि० ५ । ६ ॥ ६ । ४१ ॥ ९ । ३२ ॥

**सद्धर्मः** । मन्वन्तरशब्दं पश्यत ॥

**सनकः** । ब्रह्मणो मानसः पुत्रः । तस्य भ्रातरः सनन्दनः सनातनः सनत्सुजातश्चेति कुमाराः । सर्वेऽपि ते ऊर्ध्वरेतसः । तेषां सृष्टिः । तृ० १२ । ४ ॥ च० ८ । १ ॥ तैः कृता भगवत्स्तुतिः । तृ० १५ । ४६--५० ॥ तेषां वैकुण्ठलोकगमनम् । जयविजयाभ्यां तेषां निरोधे कृते तैस्ताभ्यां शापदानादिकथा । तृ० १५ । १२--१६ । ३७ ॥ स० १ । ३६--॥ तैः ब्रह्माणं प्रति योगमार्गप्रश्नकरणम् । ए० १३ । १७ ॥

१ **सनत्कुमारः** । ब्रह्मणो मानसः पुत्रः । विशेषं सनकशब्दे पश्यत । तृ० ८ । ७ । तेन पृथवे ज्ञानोपदेशः । च० २२ ॥

२ **सनत्कुमारः** । भगवदवतारः । प्र० ३ । ६ ॥ द्वि० ७ । ५ ॥

**सनद्वाजः** । क्ष० सू० वं० । ३ शुचेः पुत्रः । तत्पुत्रः ऊर्ध्वकेतुः । न० १३ । २२ ॥

**सनन्दनः** । ब्रह्मणो मानसः पुत्रः । विशेषं सनकशब्दे पश्यत ॥

**सन्ततिः** । क्ष० सो० वं० । अलर्कस्य पुत्रः । तत्पुत्रः १ सुनीथः । न० १७ । ८ ॥

**सन्ततेयुः** । सन्तनेयुः । क्ष० सो० वं० । रौद्राश्वस्य पुत्रः । न० २० । ४ ॥

**सन्तर्दनः** । क्ष० सो० वं० । केकयस्य ४ धृष्टकेतोः पुत्रः । न० २४ । ३८ ॥

**सन्तः** । तेषां लक्षणम् । तृ० २५ । २१ ॥

१ **सन्तोषः** । तुषितेष्वन्यतमः । च० १ । ७ ॥ शेषं तुषितशब्दे पश्यत ॥

२ **सन्तोषः** । अलंबुद्धिः । गुणः । प्र० १६ । २७ ॥

**सन्दंशः** । नरकः । पं० २६ । ७ । १९ ॥

**सन्धिः** । क्ष० सू० वं० । प्रसुश्रुतस्य पुत्रः । तत्पुत्रः अमर्षणः । न० १२ । ७ ॥

**सन्ध्या** । सन्ध्याकालाभिमानिनी देवता । तस्या ब्रह्मणा सृष्टिः तद्रूपवर्णनं च । तृ० २० । २८--५३ ॥ तत्कालवर्णनम् । १४ । २२--२३ ॥ १८ । २६ ॥

**सन्नतेयुः** । सन्तनेयुशब्दं पश्यत ॥

**सन्नतिमान्** । क्ष० सो वं० । पूरुवंश्यस्य सुमतेः पुत्रः । तत्पुत्रः कृतिः । न० २१ । २८ ॥

**सप्तगोदावरी** । तीर्थविशेषः । द० ७९ । १२ ॥

**सन्निवेशः** । त्वष्टुः पुत्रः । ष० ६ । ४४ ॥

**सप्तद्वीपाः** । तेषां नामानि । जम्बू प्लक्ष शाल्मलि कुश क्रौञ्च शाक पुष्कर इति । तेषां प्रियव्रतरथभ्रमणेनोत्पत्तिः । **पं० १ । ३१–३२** ॥ तत्पतयः आग्नीध्रादयः सप्त । ३३ ॥

**सप्तधातवः** । त्वक्चर्मादयः । **द्वि० १० । ३१** ॥

**सप्तमं मन्वन्तरम्** । वर्तमानं वैवस्वतमन्वन्तरम् । तदधिपतिः श्राद्धदेवनामा विवस्वत पुत्रः । तत्पुत्रा इक्ष्वाकु प्रभृतयः । इन्द्रः पुरंदरनामा । देवा वसुरुद्रादित्याः । कश्यपादयः सप्तर्षयः । भगवान् वामनः । **अ० १३ । १–६** ॥

**सप्तर्षयः** । एतन्मन्वन्तरीयाः कश्यपादयः । **अ० १३ । ५** ॥ इतरमन्वन्तरेषु ते पृथक्पृथक् सन्ति । ते तत्र तत्र मन्वन्तरेषु द्रष्टव्याः ॥

**सप्तर्षिमण्डलम्** । **पं० २२ । १७** ॥

**सप्ताधोलोकाः** । अधोलोकशब्दं पश्यत ॥

**सप्तोर्ध्वलोकाः** । ऊर्ध्वलोकशब्दं पश्यत ॥

**सप्तवती** । नदी । **पं० १९ । १८** ॥

**सप्तसमुद्राः** । क्षारोदः इक्षुरसोदः सुरोदः घृतोदः क्षीरोदः दधिमण्डोदः शुद्धोदश्चेति । **पं० १ । ३३** ॥

**सभानरः** । क्ष० सो० वं० । ययातिपुत्रस्य अनोः पुत्रः । तत्पुत्रः कालनरः । **न० २३ । १** ॥

**समन्तपञ्चकम्** । स्यमन्तपञ्चकशब्दं पश्यत ॥

**समरथः** । क्ष० सू० वं० । निमिवंश्यस्य क्षेमनिधेः पुत्रः । तत्पुत्रः सत्यरथः । **न० १३ । २४** ॥

**समाधिः** । भगवति मनसः प्रणिधानम् । **प्र० ५ । १३** ॥ **१८ । ३१** ॥

**समुद्रः** । उत्पत्तिः । **द्वि० १ । ३२** ॥ तत्पुत्री प्राचीनबर्हिषो भार्या शतद्रुतिः । **च० २४ । ९–१३** ॥ तत्कृता श्रीरामस्तुतिः । **न० १० । १३–१६** ॥

**सम्भूतिः** । वैराजस्य भार्या । तत्पुत्रः अजितनामा भगवान् । **अ० ५ । ९** ॥

**संमर्दनः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता देवकी । **न० २४ । ५४** ॥

**सम्राट्** । क्ष० । २ चित्ररथस्य पुत्रः । तद्भार्या उत्कला । तत्पुत्रः मरीचिः । **पं० १५ । १५** ॥

**१ सरमा** । दक्षप्रजापतिपुत्री कश्यपस्य भार्या । तत्पुत्राः श्वापदाः । **प० ६ । २५–२६** ॥

**२ सरमा** । इन्द्रदूती शुनी । **पं० २४ । ३०** ॥

**सरयूः** । नदी । **पं० १९ । १८** ॥

**१ सरस्वती** । नदी । तत्तीरे बादरायणेन वेदविभागादिकरणम् । **प्र० ४ । १५–२७** । भागवतनिर्माणम् । **७ । २–८** ॥ तत्र कर्दमेन तपश्चरणम् । **तृ० २१ । ६** ॥ **द्वि० ९ । ४४** ॥ **तृ० १ । २१** ॥ **पं० २० । १०** ॥

**२ सरस्वती** । देवगुह्यस्य भार्या । तत्पुत्रः २ सार्वभौमः । **अ० १३ । १७** ॥

**सरूपा** । २ दक्षस्य पुत्री । भूतप्रजापतेर्भार्या । तत्पुत्राः कोटिशो रुद्राः । **ष० ६ । १७** ॥

**सर्गः** । पुराणस्य दशलक्षणेष्वन्तर्भूतः । **द्वि० १०** ॥ नवविधः । **तृ० १० । १३–२५** ॥

**सर्पदंशः** । तेन मरणम् । नारदमातुः । **प्र० ६ । ९** ॥ २ परीक्षितः । **द्वा० ६ । १६–**।

**सर्पसत्रम्** । जनमेजयस्य । **द्वा० ६ । १६–२८** ॥

**सर्पात्** शिक्षिता गुणाः । **ए० ९ । १४–१५** ॥

**सर्वकामः** । क्ष० सू० वं० । ऋतुपर्णस्य पुत्रः । तत्पुत्रः सुदासः । **न०** ९ । १७–१८ ॥

**सर्वगतः** । क्ष० सो० वं० । पाण्डवस्य भीमसेनस्य पुत्रः । तन्माता काली । **न०** २२ । ३१ ॥

**सर्वतेजाः** । व्युष्टस्य पुत्रः । तन्माता पुष्करिणी । तद्भार्या आकूतिः । तत्पुत्रः चक्षुर्नामा मनुः । **च०** १३ । १४–१५ ॥

१ **सर्वतोभद्रः** । मेरुपर्वतस्थो ह्रदः । **पं०** १६ । १४॥

२ **सर्वतोभद्रः** । क्रौञ्चद्वीपस्थः पर्वतः । **पं०** २० । २१ ॥

**सर्वसाधारणो धर्मः** । **स०** ११ । ८–१२ ॥

**सवनः** । प्रियव्रतस्य पुत्रः । ऊर्ध्वरेताः । **पं** १ । २५–२६ ॥

**सविता** । कश्यपस्य पुत्रः । तन्माता अदितिः । **ष०** ६ । ३९ ॥ तत्पत्नी पृश्निः । तत्पुत्र्यः सावित्री व्याहृतिः त्रयी च । तत्पुत्राः अग्निहोत्रादयः । १८ । १ ॥

१ **सहः** । प्राणनामकवसोः पुत्रः । **ष०** ६ । १२ ॥

२ **सहः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता लक्षणा । **द०** ६१ । १५ ॥

१ **सहदेवः** । क्ष० सू० वं० । **न०** १२ । ११ ॥

२ **सहदेवः** । क्ष० सो० वं० । हर्यवनस्य पुत्रः । **न०** १७ । १७ ॥

३ **सहदेवः** । क्ष० सो० वं० । मित्रायोः पुत्रः । **न०** २२ । १ ॥

४ **सहदेवः** । क्ष० सो० वं० । पाण्डोः पुत्रः । तन्माता माद्री । अश्विभ्यां जातः । **न०** २२ । २८ ॥ तस्य द्रौपद्यां जातः पुत्रः श्रुतकर्मा । ३० ॥ तस्यान्या भार्या विजया । तत्पुत्रः सुहोत्रः । ३१ ॥ **प्र०** ७ । ५० ॥

५ **सहदेवः** । क्ष० सो० वं० । जरासन्धस्य पुत्रः । तत्पुत्रः सोमापिः । **न०** २२ । ९ ॥ अन्यः पुत्रः मार्जारिः । ४६ ॥ तस्य पट्टाभिषेकः श्रीकृष्णेन । **द०** ७२ । ४८ ॥

**सहदेवा** । क्ष० सो० वं० । यदुवंश्यस्य देवकस्य पुत्री । वसुदेवस्य भार्या । **न०** २४ । २३ । तत्पुत्राः पुरुः विश्रुतः इत्यादयः । ५३ ॥

१ **सहस्रजित्** । क्ष० सो० वं० । यदोः पुत्रः । तत्पुत्रः शतजित् । **न०** २३ । २०–२१ ॥

२ **सहस्रजित्** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता जाम्बवती । **द०** ६१ । ११ ॥

**सहस्रश्रुतिः** । शाल्मलिद्वीपस्थं वर्षम् । **पं०** २० । १० ॥

**सहस्रस्रुतिः** । शाकद्वीपस्था नदी । **पं०** २० । २६ ॥

**सहस्रस्रोतः** । शाकद्वीपस्थः पर्वतः । **पं०** २० । २६ ॥

**सहस्राजित्** । क्ष० सो० वं० । भजमानस्य पुत्रः । **न०** २४ । ८ ॥

**सहस्रानीकः** । क्ष० सो० वं० । शतानीकस्य पुत्रः । तत्पुत्रः अश्वमेधजः । **न०** २२ । ३९ ॥

**सहाः** । सहोमासः । मार्गशीर्षः । **द्वा०** ११ । ४१ ॥

**सहिष्णुः** । ऋ० । पुलहस्य पुत्रः । तन्माता गतिः । **च०** १ । ३८ ॥

**सह्यः** । पर्वतः । **पं०** १९ । १६ ॥

**सांपरायिकम्** । पारलौकिकम् । **द्वि०** १ । १४ ॥

**सांवर्तका मेघाः** । **द०** २५ । २ ॥

**सांसारिकं दुःखम्** । **तृ० ३० ॥**

**साक्षात्पशुयज्ञस्य निन्दा** । **स०** १५ । ७–११ ॥

**साक्षिणः** । सूर्यादयः । **ष०** १ । ४२ ॥

**सागराः** । सगरस्य पुत्राः । तेषां कपिलेन भस्मीकरणं तद्भस्मनः गङ्गाजलसम्बन्धेन स्वर्गगमनं च । **न० ९** । १३ ॥

**साग्रयः** । पितृगणेष्वन्यतमाः । तत्पत्नी स्वायंभुवदक्ष प्रजापतिपुत्री स्वधा । **च० १** । ६३ ॥

**साङ्ख्यम्** । **प्र० ३** । १० ॥ **द्वि० १** । ६ । **तृ० २५** । ३१ ॥ **२६** । ३–६८ ॥ **२८** । ३९–४१ ॥ **स० ७** । २२–२७ ॥ **न० ८** । १४ ॥ **ए० २०** । २२ ॥ **२२** । १२–१६ ॥ २१–२४ । २९–३२ ॥ **२३** । ४८–५५ ॥ **२४** । २–२८ ॥

**साङ्ख्यायनः** । पराशरस्य गुरुः । ऋ० । **तृ० ८** । ८ ॥

**सात्यकिः** । क्ष० सो० वं० । सत्यकस्य पुत्रः । तस्य युयुधान इति नाम । तत्पुत्रः ९ जयः । **न० २४** । १३–१४ ॥ **प्र० १०** । १८ ॥

**सात्वतः** । क्ष० सो० वं० । आयोः पुत्रः । तत्पुत्राः भजमानः भजिः दिव्यः २ वृष्णिः देवावृधः १ अन्धकः महाभोजश्च इति सप्त । **न० २४** । ६ ॥

**सात्वतसंहिता** । श्रीभागवतम् । **प्र० ७** । ६ ॥

**सात्वततन्त्रम्** । नारदकृतम् । **प्र० ३** । ८ ॥

**सात्वताः** । भक्ताः । **प्र० १४** । २५ ॥ **द्वि० ४** । १४ ॥

**साधुः** । तल्लक्षणम् । **प्र० ५** । २४ ॥ **१८** । ५० ॥ **तृ० २५** । २१–२४ ॥ **च० ११** । १० ॥ **२०** । ३, ५–६, २९ ॥ **२२** । १४, १९ ॥ **पं० १** । २–३ ॥ **५** । २–३ ॥ **ष० ५** । ४४ ॥ **६** । ४८ ॥ **१७** । ३७ ॥ **स० ४** । ३०–४२ ॥ **अ० ७** । ३९, ४४ ॥ **११** । ४८ ॥ **न० २१** । ५–१६ ॥ **द० १** । ५८ ॥ २ । ३०-३१ ॥ ७ । १३ ॥ **२४** । ४–५ ॥ **३२** । १९ ॥ **४८** । ३१ ॥ तेषां स्तुतिः । **द० ८४** । ११ ॥ तत्सङ्गमहिमा । **ए० १२** ॥

**साध्या** । २ दक्ष प्रजापतेः पुत्री । धर्मप्रजापते र्भार्या । तत्पुत्राः साध्याः । **ष० ६** । ७ ॥

**साध्याः** । धर्मस्य पुत्राः । **ष० ६** । ७ ॥ **द्वि० ३** । ४ । तेषां ब्रह्मणा सृष्टिः । **तृ० २०** । ४२ ॥

**सामवेदः** । **प्र० ४** । २० ॥ तद्धर्ता जैमिनिः । २१ ॥ **द्वा० ६** । ५२ ॥

**सान्दीपिनिः** । अवन्तीपुरवास्तव्यः काश्यो ब्राह्मणः । श्रीकृष्णरामयोर्गुरुः । **द० ४५** । ३१ ॥ तृ० ३ । २ ॥ तस्य मृतपुत्रानयनं श्रीकृष्णेन । ३८–४६ ॥

**साम्बः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता जाम्बवती । **द० ६१** । ११ ॥ तेन दुर्योधनपुत्र्याः लक्ष्मणायाः स्वयंवरेऽपहरणं तस्य कौरवैर्बन्धनं बलरामेण मोचनं च । ६८ ॥ तस्य स्त्रीवेषकल्पनम् । ऋषिभिर्यदुकुमाराणां शापश्च । **ए० १** । १४–१७ ॥ तस्य सुब्रह्मण्यावतार । **तृ० १** । ३० ॥

१ **सायम्** । पुष्पार्णस्य पुत्रः । तन्माता प्रभा । **च० १३** । १३ ॥

२ **सायम्** । धातृनामकस्यादित्यस्य पुत्रः । तन्माता कुहूः । **ष० १८** । ३ ॥

**सारणः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता रोहिणी । **न० २४** । ४६ ॥ **प्र० १४** । २८ ॥

**सारमेयः** । क्ष० सो० वं० । श्वफल्कस्य पुत्रः । न० २४ । १६ ॥

**सारमेयादनम्** । नरकः । पं० २६ । ७ । २७ ॥

**सारस्वतः** । ऋ० । द्वि० ७ । ४५ ॥

**सारस्वताः** । देशः । प्र० १० । ३४ ॥

१ **सार्वभौमः** । क्ष० सो० वं० । २ विदूरथस्य पुत्रः । तत्पुत्रः २ जयसेनः । न० २२ । १० ॥

२ **सार्वभौमः** । देवगुह्यस्य पुत्रो भगवदवतारः । तन्माता २ सरस्वती । सः महाबलये इन्द्रपदं दास्यति । अ० १३ । १७ ॥

१ **सावर्णिः** । विवस्वतः छायादेव्यां जातः पुत्रः । ष० ६ । ४१ ॥ सः अष्टमो मनुः । अ० १३ । ११ ॥

२ **सावर्णिः** । अथर्ववेदर्षिः । द्वा० ७ । ३ ॥

३ **सावर्णिः** । पौराणिकः ऋषिः । द्वा० ७ । ५ ॥

**सावर्णिमन्वन्तरम्** । अष्टममन्वन्तरशब्दं पश्यत ॥

१ **सावित्री** । सवितुः पुत्री । ष० १८ । १ ॥

२ **सावित्री** । प्लक्षद्वीपस्था नदी । पं० २० । ४ ॥

**सिंहः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता लक्ष्मणा । द० ६१ । १५ ॥

**सिंहलः** । जम्बूद्वीपस्योपद्वीपः । पं० १९ । ३० ॥

**सिंहिका** । दितेः पुत्री । हिरण्यकशिपोः स्वसा । विप्रचित्तेर्भार्या । तत्पुत्रो राहुः । ष० ६ । ३७ ॥ १८ । १३ ॥

**सिद्धपदम्** । क्षेत्रम् । तत्र देवहूत्या तपस्तप्त्वा सिद्धिप्राप्तिः । तृ० ३३ । ३१ ॥

**सिद्धाः** । देवयोनयः । तेषां सृष्टिः । त० २० । ४४ ॥

१ **सिद्धिः** । भगनामकादित्यस्य भार्या । ष० १८ । २ ॥

२ **सिद्धिः** । अणिमादिसिद्धयः । ए० १५ ॥

१ **सिनीवाली** । अङ्गिरसः पुत्री । तन्माता २ श्रद्धा । च० १ । ३४ ॥ सा धातुर्भार्या । ष० १८ । ३ ॥

२ **सिनीवाली** । शाल्मलिद्वीपस्था नदी । पं० २० । १० ॥

**सिन्धुः** । नदी । पं० १९ । १८ ॥

**सिन्धुद्वीपः** । क्ष० सू० वं० । नाभस्य पुत्रः । तत्पुत्रः अयुतायुः । न० ९ । १६ ॥

१ **सीता** । गङ्गायाः शाखाभूता नदी । पं० १७ । ५–६ ॥

२ **सीता** । सीरध्वजस्य पुत्री । श्रीरामस्य भार्या । न० १३ । १८ ॥ तस्या विवाहः । १० । ७ ॥ तत्त्यागो रामेण । ११ । १० ॥ पुत्रौ कुशो लवश्च । ११ ॥ तस्या भूविवरप्रवेशः । १५ ॥

**सीरध्वजः** । क्ष० सू० वं० । निमिवंश्यस्य ह्रस्वरोम्णः पुत्रः । तत्पुत्री २ सीता । न० १३ । १७–१८ ॥ तत्पुत्रः कुशध्वजः । १९ ॥

**सुंहः** । क्ष० सो० वं० । २ बलेर्भार्यायां दीर्घतमस ऋषेर्जातः पुत्रः । न० २३ । ५ ॥

**सुकन्या** । शर्यातिराजस्य पुत्री । न० ३ । २ ॥ च्यवनऋषेर्भार्या । १० ॥ तदुपाख्यानम् । ३ ॥

१ **सुकर्मा** । त्रयोदशमन्वन्तरीयो देवगणः । अ० १३ । ३१ ॥

२ **सुकर्मा** । क्ष० सो० वं० । श्वफल्कस्य पुत्रः । न० २४ । १६ ॥

**३ सुकर्मा** । सामगो जैमिनेः शिष्य ऋषिः । तच्छिष्यौ कौसल्यो हिरण्यनाभः, पौष्यञ्जिश्च । द्वा० ६ । ७६–७७ ॥

**सुकुमारः** । क्ष० सो० वं० । २ धृष्टकेतोः पुत्रः । तत्पुत्रः २ वीतिहोत्रः ॥ न० १७ । ९ ॥

**सुकृतिः** । दशममन्वन्तरीय ऋषिः । अ० १३ । २२ ॥

**तनः** । क्ष० सो० वं० । सुनीथस्य पुत्रः । तत्पुत्रः धर्मकेतुः । न० १७ । ८ ॥

**सुकेतुः** । क्ष० सू० वं० । नन्दिवर्धनस्य पुत्रः । तत्पुत्रः देवरातः । न० १३ । १४ ॥

**१ सुखम्** । धर्मप्रजापतेः पुत्रः । तन्माता शान्तिः । च० १ । ५१ ॥

**२ सुखम्** । दुःखसुखात्ययः । ए० १९ । ४१ ॥

**सुखीनलः** । क्ष० सो० वं० । नृचक्षुषः पुत्रः । तत्पुत्रः परिप्लवः । न० २२ । ४१–४२ ॥

**सुगतिः** । गयस्य पुत्रः । पं० १५ । १४ ॥

**सुग्रीवः** । वानरः । न० १० । १९ ॥

**सुचारुः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता रुक्मिणी । द० ६१ । ८ ॥

**सुचीरा** । श्वफल्कस्य पुत्री । न० २४ । १७ ॥

**सुज्येष्ठः** । शुङ्गस्य अग्निमित्रस्य पुत्रः । द्वा० १ । १६ ॥

**सुतपसः** । अष्टममन्वन्तरीया देवाः । अ० १३ । १२ ॥

**१ सुतपाः** । क्ष० सू० वं० । न० १२ । १२ ॥

**२ सुतपाः** । क्ष० सू० वं० । हेमस्य पुत्रः । तत्पुत्रः २ बलिः । न० २३ । ४ ॥

**३ सुतपाः** । वसुदेवस्य प्राग्भवीयं नाम । तत्पत्नी पृश्निः । द० ३ । ३२–३३ ॥

**सुतलम्** । तृतीयोऽधोलोकः । तदुत्पत्तिः । द्वि० १ । २७ ॥ ५ । ४० । पं० २४ । ७ ॥ तद्वर्णनम् । १८ ॥

**सुत्रामाः** । त्रयोदशमन्वन्तरीया देवाः । अ० १३ । ३१ ॥

**१ सुदर्शनः** । क्ष० । १ भरतस्य पुत्रः । पं० ७ ।

**२ सुदर्शनः** । [अग्नेः पुत्र] ओघवत्या भर्ता । न० २ १८ ॥

**३ सुदर्शनः** । ऋ० । प्र० ९ । ७ ॥

**४ सुदर्शनः** । क्ष० सू० वं० । शङ्खणस्य पुत्रः । तत्पुत्रः अग्निवर्णः । न० १२ । ५ ॥

**५ सुदर्शनः** । विद्याधरः । तस्य अङ्गिरसां शापेन अजगरजन्मप्राप्तिः तेन नन्दगोपग्रहणं कृष्णेन तं हत्वा मोक्षणं च । द० ३४ । १२ ॥

**सुदर्शनम्** । विष्णुचक्रम् । राहोर्ग्रासात्सूर्यचन्द्रयो रक्षणम् । पं० २४ । १–३ ॥ अश्वत्थाम्नोऽपाण्डवेयास्त्रनिवारणम् । प्र० ८ । १३ ॥ तत्स्तुतिः १ अम्बरीषराजकृता । न० ५ । ३–११ ॥

**सुदक्षिणः** । पौण्ड्रकवासुदेवस्य पुत्रः । नेन श्रीकृष्णवधार्थं दक्षिणाग्नेः आभिचाराग्निनिर्माणम् । प्रतिनिवृत्तेन तेनैवाग्निना काशीपत्तनदाहश्च । द० ६६ । २८–४३ ॥

**सुदामा** । मालाकारः । नेन श्रीकृष्णरामयोः सत्कारः । द० ४१ । ४३–५३ ॥ तत्कृता भगवत्स्तुतिः । ४५–४७ ॥

**सुदामिनी** । २ शमीकस्य भार्या । न० २४ । ४४ ॥

**१ सुदासः** । क्ष० सू० वं० । सर्वकामस्य पुत्रः । तत्पुत्रः सौदासः कल्माषपादः । **न० ९ । १८ ॥** तत्तीर्थम् । **तृ० १ । २२ ॥**

**२ सुदासः** । क्ष० सो० वं० । मित्रायोः पुत्रः । तत्पुत्रः ३ सहदेवः । **न० २२ । १ ॥**

**३ सुदासः** । क्ष० सो० वं० । ३ बृहद्रथस्य पुत्रः । तत्पुत्रः ३ शतानीकः । **न० २२ । ४३ ॥**

**१ सुदेवः** । तुषितेष्वन्यतमः । **च० १ । ७ ॥** तुषितशब्दं पश्यत ॥

**२ सुदेवः** । क्ष० सू० वं० । चम्पस्य पुत्रः । तत्पुत्रः २ विजयः । **न० ८ । १ ॥**

**३ सुदेवः** । क्ष० सो० वं० । देवकस्य पुत्रः । **न० २४ । २२ ॥**

**सुदेविः** । नाभेर्भार्या । **द्वि० ७ । १० ॥** अस्याः मेरुदेवीति नामान्तरम् । **पं० ३ । १ ॥**

**सुदेष्णः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता रुक्मिणी । **द० ६१ । ८ ॥**

**सुदेष्णा** । २ बलिराजस्य भार्या । **न० २३ । ४--५ ॥**

**सुद्युः** । क्ष० सो० वं० । चारुपदस्य पुत्रः । तत्पुत्रः बहुगवः । **न० २० । २--३ ॥**

**१ सुद्युम्नः** । चाक्षुषमनोः पुत्रः । **अ० ५ । ७ ॥**

**२ सुद्युम्नः** । श्राद्धदेवपुत्र्या इलायाः पुंस्त्वप्राप्त्यनन्तरं नाम । **न० १ । २२ ॥** मेरुवनं प्रविष्टस्य सगणस्य तस्य पुनः स्त्रीत्वप्राप्तिः । २६ ॥ तस्य स्त्रीत्व पुंस्त्वयोः कालव्यवस्थया प्राप्तिः । ३९ ॥ तस्य पुंस्त्वावस्थायां जाताः पुत्राः उत्कलः गयः विमलश्चेति त्रयः । ४१ ॥ तस्य स्त्रीत्वविषये इलाशब्दं पश्यत ॥

**सुधनुः** । क्ष० सो० वं० । कुरुराजस्य पुत्रः । तत्पुत्रः २ सुहोत्रः । **न० २२ । ४--५ ॥**

**सुधर्मा** । श्रीकृष्णस्य सभा । **प्र० १४ । ३४ ३८ ॥**

**सुधामा** । क्रौञ्चद्वीपस्थं वर्षम् । तदधिपतिः तन्नामा घृतपृष्ठपुत्रः । **पं० २० । २०--२१ ॥**

**सुधृत्** । क्ष० सू० वं० । महावीर्यस्य पुत्रः । तत्पुत्रो १ धृष्टकेतुः । **न० १३ । १५ ॥**

**सुधृतिः** । क्ष० सू० वं० । राज्यवर्धनस्य पुत्रः । तत्पुत्रो नरः । **न० २ । २९ ॥**

**१ सुनक्षत्रः** । क्ष० सू० वं० । मरुदेवस्य पुत्रः । **न० १२ । १२ ॥**

**२ सुनक्षत्रः** । क्ष० सो० वं० । निरमित्रस्य पुत्रः । तत्पुत्रः बृहत्सेनः । **न० २२ । ४७ ॥**

**१ सुनन्दः** । भगवतो द्वारपालकः । **द्वि० ९ । १४ । च० १२ । २०--२२ ॥**

**२ सुनन्दः** । श्रीकृष्णानुचरः । **प्र० १४ । ३२ ॥**

**सुनन्दा** । नदी । तत्र स्वायंभुवमनुना तपश्चरणम् । **अ० १ । ८ ॥**

**सुनयः** । क्ष० सो० वं० । मेधाविनः पुत्रः । **न० २२ । ४२ ॥**

**सुनामा** । क्ष० सो० वं० । उग्रसेनस्य पुत्रः । **न० २४ । २४ ॥**

**सुनीतिः** । उत्तानपादस्य भार्या । तत्पुत्रो ध्रुवः । **च० ८ । ८--९ ॥** तस्याः स्वर्लोकगमनम् । **१२ । ३२ ॥**

**१ सुनीथः** । क्ष० सो० वं० । सन्ततेः पुत्रः । तत्पुत्रः सुकेतनः । **न० १७ । ८ ॥**

**२ सुनीथः** । क्ष० सो० वं० । सुषेणस्य पुत्रः । तत्पुत्रः नृचक्षुः । **न० २२ । ४१ ॥**

३ **सुनीथः** । क्ष० सो० वं० । सुबलस्य पुत्रः । तत्पुत्रः सत्यजित् । **न०** २२ । ४९ ॥

**सुनीथा** । अङ्गराजस्य भार्या । तत्पुत्रो वेनः । **च०** १३ । १८ ॥ सा मृत्योर्दुहिता । **१३** । ३९ ॥ भर्त्रा तस्याः त्यागः । ४७ ॥

**सुन्वान्** । सामग ऋषिः । सुमन्तोः पुत्रः । **द्वा०** ६ । ७५ ॥

**सुपर्णः** । प्लक्षद्वीपस्थः पर्वतः । **पं०** २० । ४ ॥

**सुपर्णा** । २विनताया नामान्तरम् । तत्पुत्रो गरुडः, अनूरुश्च । **प०** ६ । २२ ॥

१ **सुपार्श्वः** । मेरोः अवष्टम्भपर्वतः । **पं०** १६ । ११–१२ ॥

२ **सुपार्श्वः** । क्ष० सो० वं० । दृढनेमेः पुत्रः । तत्पुत्रः सुमतिः । **न०** २१ । २७–२८ ॥

**सुपार्श्वकः** । क्ष० सू० वं० । श्रुतायुषः पुत्रः । तत्पुत्रः ३ चित्ररथः । **न०** १३ । २३ ॥

**सुप्रतीकः** । क्ष० सू० वं० । प्रतीकाश्वस्य पुत्रः । तत्पुत्रः मरुदेवः । **न०** १२ । ११ ॥

१ **सुप्रभा** । प्लक्षद्वीपस्था नदी । **पं०** २० । ४ ॥

२ **सुप्रभा** । स्वर्भानोः पुत्री नमुचेर्भार्या । **प०** ६ । ३३ ॥

१ **सुबलः** । क्ष० सो० वं० । सुमतेः पुत्रः । तत्पुत्रः ३ सुनीथः । **न०** २२ । ४८–४९ ॥

२ **सुबलः** । गोपालः । **द०** १५ । २० ॥

१ **सुबाहुः** क्ष० सू० वं० । दाशरथिशत्रुघ्नस्य पुत्रः । **न०** ११ । १३ ॥

२ **सुबाहुः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता कालिन्दी । **द०** ६१ । १४ ॥

**सुब्रह्मण्यः** । षण्मुखशब्दं पश्यत ॥

**सुभद्रम्** । प्लक्षद्वीपस्थं वर्षम् । **पं०** २० । ३ ॥

१ **सुभद्रः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता पौरवी । **न०** २४ । ४७ ॥

२ **सुभद्रः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता भद्रा । **द०** ६१ । १७ ॥

**सुभद्रा** । वसुदेवस्य पुत्री । तन्माता देवकी । श्रीकृष्णस्य भगिनी । **न०** २४ । ५५ ॥ अर्जुनस्य भार्या । तत्पुत्रोऽभिमन्युः । २२ । ३३ ॥ तस्या विवाहः । **द०** ८६ । १–१२ ॥ **प्र०** १० । ९ ॥ **१३** । ४ ॥

**सुभानुः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः तन्माता सत्यभामा । **द०** ६१ । १० ॥

**सुभापणः** । क्ष० सू० वं० । युयुधस्य पुत्रः । तत्पुत्रः २ श्रुत । **न०** १३ । २५ ॥

१ **सुमतिः** । १. भरतस्य पुत्रः । **पं०** ७ । ३ ॥ तद्भार्या (वृद्धसेना) बृहत्सेना । तत्पुत्रो देवताजित् । १५ । २ ॥

२ **सुमतिः** । क्ष० सू० वं० । नृगस्य पुत्रः । तत्पुत्रः भूतज्योतिः । **न०** २ । १७ ॥

३ **सुमतिः** । क्ष० सू० वं० । सोमदत्तस्य पुत्रः । **न०** २ । ३६ ॥

४ **सुमतिः** । सगरस्य भार्या । तत्पुत्राः षष्टिसहस्राणि सागराः **न०** ८ । ९ ॥

५ **सुमतिः** । क्ष० सो० वं० । अन्तिभारस्य पुत्रः । तत्पुत्रः रैभ्यः । **न०** २० । ६ ७ ॥

६ **सुमतिः** । क्ष० सो० वं० । सुपार्श्वस्य पुत्रः । तत्पुत्रः सन्नतिः । **न०** २१ । २८ ॥

**७ सुमतिः** । क्ष० सो० वं० । द्युमत्सेनस्य पुत्रः । तत्पुत्रः १ सुबलः । **न० २२** । ४८ ॥

**१ सुमन्तुः** । ऋ० । व्यासशिष्योऽथर्ववित् । **द्वा० ६** । ५३ ॥ **प्र० ४** । २२ ॥

**२ सुमन्तुः** । जैमिनेः पुत्रः । सामगः । तत्पुत्रः सुन्वान् । **द्वा० ६** । ७५ ॥ तच्छिष्यः कबन्धः । ७ । १ ॥

**१ सुमनाः** । उल्मुकस्य पुत्रः । **च० १३** । १७ ॥

**२ सुमनाः** । १ मधोर्भार्या । तत्पुत्रो वीरव्रतः । **पं० १५** । १५ ॥

**सुमाली** । असुरः । **अ० १०** । ५७ ॥

**१ सुमित्रः** । क्ष० सू० वं० । इक्ष्वाकुवंशस्यान्तिमः क्षत्रियः । **न० १२** । १५ ॥

**२ सुमित्रः** । क्ष० सो० वं० । २ वृष्णेः पुत्रः । **न० २४** । १२ ॥

**३ सुमित्रः** । क्ष० सो० वं० । २ शमीकस्य पुत्रः । तन्माता सुदामिनी । **न० २४** । ४४ ॥

**४ सुमित्रः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता जाम्बवती । **द० ६१** । ११ ॥

**सुयज्ञः** । उशीनराणां राजा । तत्कथा । **स० २** । २८--६० ॥

**सुयशाः** । चतुर्थो मौर्यः । **द्वा० १** । १४ ॥

**१ सुरथः** । क्ष० सू० वं० । रणकस्य पुत्रः । **न० १२** । १५ ॥

**२ सुरथः** । क्ष० सो० वं० । १ जह्नोः पुत्रः । तत्पुत्रः २ विदूरथः । **न० २२** । ९ ॥

**सुरभिः** । दक्षप्रजापतिपुत्री । कश्यपस्य भार्या । तत्पुत्रा गोमहिषप्रभृतयो द्विशफाः । **ष० ६** । २६–२७ ॥ तया इन्द्रेण सह श्रीकृष्णस्याभिषेकः । **द० २७** ॥ तत्कृता श्रीकृष्णस्तुतिः । १९–२० ॥

**सुरसनम्** । वनम् । **तृ० २३** । ४० ॥

**१ सुरसा** । नदी । **पं० १९** । १८ ॥

**२ सुरसा** । २ दक्षप्रजापतिपुत्री । कश्यपस्य भार्या । तत्पुत्रा यातुधानाः । **ष० ६** । २५ । २८ ॥

**सुरान्तकः** । राक्षसः । तस्य वधः । **न० १०** । १८ ॥

**सुराष्ट्रः** । देशः । **तृ० १** । २४ ॥

**सुरुचिः** । उत्तानपादस्य भार्या । तत्पुत्रः उत्तमः । **च० ८** । ८ ॥ तया स्वसपत्नीपुत्रस्य ध्रुवस्य अधिक्षेपकरणम् । १०--१३ ॥ तस्याः मरणम् । १० । ३ ॥

**सुरोचनम्** । शाल्मलिद्वीपस्थं वर्षम् । **पं० २०** । ९ ॥

**सुरोचिः** । वसिष्ठस्य पुत्रः । तन्माता ऊर्जा । **च० १** । ४०--४१ ॥

**सुरोदः** । समुद्रः । **पं० १** । ३३ ॥ २० । १३ ॥

**सुवशः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता श्रीदेवा । **न० २४** । ५१ ॥

**सुवर्चला** । भरतवंश्यस्य परमेष्ठिनो भार्या । तत्पुत्रः प्रतीहः । **पं० १५** । ३ ॥

**सुवर्णम्** । कनकम् । तस्य कलिस्थानत्वम् । **प्र० १७** । ३८--३९ ॥ १२ । १४ ॥

**सुवासनाः** । दशममन्वन्तरीया देवाः । **अ० १३** । २२ ॥

**१ सुवीरः** । क्ष० सो० वं० । क्षेम्यस्य पुत्रः । तत्पुत्रः रिपुञ्जयः । **न० २१** । २९ ॥

**२ सुवीरः** । क्ष० सो० वं० । २ शिबेः पुत्रः न० २३ । ३ ॥

**३ सुवीरः** । क्ष० सो० वं० । देवश्रवसः पुत्रः । तन्माता कंसवती । न० २४ । ४१ ॥

**सुव्रतः** । क्ष० सो० वं० । क्षेमस्य पुत्रः । तत्पुत्रः (धर्मनेत्रः ।) धर्मसूत्रः । न० २२ । ४८ ॥

**सुशर्मा** । अन्तिमः कण्वः । तद्भृत्येन वृषलेन तं हत्वा राज्यकरणम् । द्वा० १ । २२--२३ ॥

**सुशान्तिः** । क्ष० सो० वं० । ४ शान्तेः पुत्रः । तत्पुत्रः पुरुजः । न० २१ । ३१ ॥

**सुषुम्ना** । नाडी । द्वि० २ । २४ ॥

**१ सुषेणः** । स्वारोचिषमनोः पुत्रः । अ० १ । १९ ॥

**२ सुषेणः** । क्ष० स० वं० । वृष्टिमतः पुत्रः । तत्पुत्रः २ सुनीथः । न० २२ । ४१ ॥ [प्र० १४ । ३१] ॥

**३ सुषेणः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता देवकी । न० २४ । ५४ ॥

**सुषोमा** । नदी । पं० १९ । १८ ॥

**सुहूः** । क्ष० सो० वं० । उग्रसेनस्य पुत्रः । न० २४ । २४ ॥

**१ सुहोत्रः** । क्ष० सो० वं० । क्षत्रवृद्धस्य पुत्रः । तत्पुत्राः काश्यः कुशः गृत्समद इति त्रयः । न० १७ । ३ ॥

**२ सुहोत्रः** । क्ष० सो० वं० । सुधनुषः पुत्रः । तत्पुत्रः च्यवनः । न० २२ । ५ ॥

**३ सुहोत्रः** । क्ष० सो० वं० । पाण्डवस्य सहदेवस्य पुत्रः । तन्माता विजया । न० २२ । ३१ ॥

**सूकरमुखम्** । नरकः । पं० २३ । ७ । १६ ॥

**सूचीमुखम्** । नरकः । पं० २६ । ७ । ३६ ॥

**सूचकः** । परदोषस्य वक्ता । प्र० १७ । २२ ॥

**सूतः** । रोमहर्षणस्य पुत्रः । उग्रश्रवा नाम पौराणिकः । तं प्रति शौनकादीनां श्रेयस्साधनकथनप्रार्थना । प्र० १ । ६–२३ ॥ तत्कृतं व्यासनमनरूपं मङ्गलम् । २ । २ ॥ तत्कृतं शुकाचार्यनमनरूपं मङ्गलम् । ३ ॥ तेन परीक्षित्कथाकथनारम्भः । ७ । १२–॥ अनेनैव महाभारतभागवतादीनां शौनकादिभ्यः कथनम् ॥

**सूनृता** । धर्मस्य भार्या । तत्पुत्रः सत्यसेनः । अ० १ । २५ ॥ सत्यसेनस्य स्वधामा सत्यसहः इति च नामान्तरे । १३ । २९ ॥

**सूर्म्या** । अनुह्रादस्य भार्या । पुत्रौ बाष्कलो महिश्च । ष० १८ । १६ ॥

**सूर्यः** । सूर्यमण्डलाभिमानी देवः । तत्स्तुतिः जडभरतकृता । पं० ७ । १४ ॥ तेन मेरुं ध्रुवं च प्रदक्षिणेन परिक्रमणम् । २२ । १– ॥ तद्रथवर्णनम् । पं० २१ । १३ ॥ तत्स्तुतिः याज्ञवल्क्यकृता । द्वा० ६ । ६७–७२ ॥ वाजिरूपधरेण तेन याज्ञवल्क्याय वाजसनीयसंहितोपदेशः । ७३–७४ ॥ तेन द्वादशमासनयनप्रकारः । ११ । ३०--५० ॥ शेषं विवस्वच्छब्दे पश्यत । तस्य सारथिः अनूरुः अरुणः । ष० ६ । २२ ॥

**सूर्यवंशः** । न० १–१३ ॥

**सूर्योपरागवर्णनम्** । द० ८२ ॥

**१ सृञ्जयः** । उत्तममनोः पुत्रः । अ० १ । २३ ॥

**२ सृञ्जयः** । क्ष० सो० वं० । कालनरस्य पुत्रः । तत्पुत्रः २ जनमेजयः । न० २३ । १ ॥

**३ सृञ्जयः** । क्ष० सो० वं० । २ शूरस्य पुत्रः । **न०** **२४** । २९ ॥ तद्भार्या उग्रसेनपुत्री राष्ट्रपाली । तत्पुत्राः १ वृषदुर्मर्षणादयः । ४२ ॥

**४ सृञ्जयाः** । पाञ्चालानां पाण्डवानां च नामैतत् । **प्र०** ७ । १३ ॥

**सृतञ्जयः** । क्ष० सो० वं० । कर्मजितः पुत्रः । तत्पुत्रः विप्रः । **न०** **२२** । ४७ ॥

**१ सृष्टिः** । क्ष० सो० वं० । उग्रसेनस्य पुत्रः । **न०** **२४** । २४ ॥

**२ सृष्टिः** । जगत्सृष्टिः । सा दशविधा । **तृ०** १० ॥ तस्याः क्रमः । **न०** **१** । ८--॥ तत्कथाकथनम् । **द्वि० ५** । २१--४२ ॥ **६** । १--१० ॥ १० । १०--३२ ॥ **तृ० ५** । २३--३६ ॥ **६** । १--३३ ॥ ९ । २०--२५ ॥ १० । ११--२८ ॥ **ए० २४** ॥

**१ सेतुः** । रामसेतुः । **न०** १० । १६ ॥ **द०** ७९ । १५ ॥

**२ सेतुः** । क्ष० सो० वं० द्रुह्योः पौत्रः । बभ्रोः पुत्रः । तत्पुत्रः आरब्धः । **न० २३** । १४--१५ ॥

**१ सेनजित्** । क्ष० सू० वं० । कृशाश्वस्य पुत्रः । तत्पुत्रः युवनाश्वः । **न०** ६ । २५ ॥

**२ सेनजित्** । क्ष० सो० वं० । विशदस्य पुत्रः । तत्पुत्राः रुचिराश्वः दृढहनुः काश्यः वत्सश्च । **न०** २१ । २३ ॥

**३ सेनजित्** । अप्सराः फाल्गुनमासनेत्री । **द्वा०** **११** । ४० ॥

**सैन्धवः** । क्ष० । जयद्रथः । **प्र०** १५ । १६ ॥

**सैन्धवायनः** । ऋ० शुनकस्य शिष्यः । **द्वा०** ७ । ३ ॥

**सोमः** । चन्द्रमण्डलाभिमानी देवः । अत्रेः पुत्रः । तन्माता अनसूया । स ब्रह्मणोंऽशेन जातः । **च०** **१** । १५ । ३३ ॥ तस्य अत्रिऋषेर्नेत्राज्जननम् । **न०** १४ । २--३ ॥ तेन राजसूयेन यजनम् । ४ ॥ तेन बृहस्पतिपत्न्यास्तारायाः परिग्रहः । तस्य तस्यां जातः पुत्रो बुधः । ४--१४ ॥ तद्भार्याः नक्षत्राभिमानिन्यो २ दक्षप्रजापतिपुत्र्योऽश्विन्यादयः सप्तविंशतिः । तस्य यक्ष्मरोगप्राप्तिः । **ष०** **६** । २३ ॥ **द्वि० ३** । ९ ॥

**१ सोमकः** । क्ष० सो० वं० । ३ सहदेवस्य पुत्रः । तत्पुत्रो जन्तुः । **न०** **२२** । १ ॥ तस्य शतं पुत्राः तेषु यवीयान् पृषतः । २ ॥

**२ सोमकः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता कालिन्दी । **द०** ६१ । १४ ॥

**१ सोमदत्तः** । क्ष० सू० वं० । कृशाश्वस्य पुत्रः । तत्पुत्रः ३ सुमतिः । **न०** २ । ३६ ॥

**२ सोमदत्तः** । क्ष० सो० वं० । बाह्लीकस्य पुत्रः । तत्पुत्राः भूरिः भूरिश्रवाः शलश्च । **न०** २२ । १८--१९ ॥

**सोममण्डलम्** । **पं०** २२ । ८--१० ॥

**सोमशर्मा** । सप्तमो मौर्यः । **द्वा०** १ । १४--१५ ॥

**सोमापिः** । क्ष० सो० वं० । जरासन्धस्य पौत्रः ॥ तत्पुत्रः श्रुतश्रवाः । **न०** **२२** । ९ ॥

**सोहञ्जिः** । क्ष० सो० वं० । यदुवंशान्तर्गतहैहयवंशस्य कुन्तेः पुत्रः । तत्पुत्रः महिष्मान् । **न०** २३ । २२ ॥

**सौदासः** । क्ष० सू० वं० । सुदासस्य पुत्रः । तस्य-मित्रसह इति कल्माषपाद इति च नामान्तरे ।

तद्भार्या मदयन्ती । न० ९ । १८ ॥ तस्य वसिष्ठशापादिकथा । १९--४० ॥ तत्पुत्रः अश्मको विसिष्ठाज्जातः । ३९ ॥

**सौबली** । गान्धारी । **प्र०** १३ । ३० ॥

**सौभगः** । वामनरूपिणो भगवतः पुत्रस्य बृहच्छ्लोकस्य पुत्रः । **प०** १८ । ८ ॥

**सौभरिः** । बह्वृच ऋषिः । देवमित्रस्य शिष्यः । **द्वा०** ६ । ५६ ॥ तद्भार्याः मान्धातृराजपुत्र्यः पञ्चाशत् । **न०** ६ । ३८ ॥ तस्य योगप्रभावादिकथा । ३८--५४ ॥ तेन गरुडाय शापदानम् । **द०** १७ । ९--११ ॥ **द्वि०** ७ । ४५ ॥

**सौमनस्यम्** । शाल्मलं वर्षम् । **पं०** २० । ९ ॥

**सौम्याः** । पितृगणेष्वन्यतमाः । तद्भार्या स्वायंभुवमनुपुत्री स्वधा । **च०** १ । ६३ ॥

**सौररथपरिवर्तः** । **पं०** २१ । ९--॥

**सौरो गणः** । **द्वा०** ११ । २९--५० ॥

**सौवीराः** । देशः । **प्र०** १० । ३५ । **तृ०** १ २४ ॥

**स्कन्दः** । अग्निनामकवसोः कृत्तिकायामुत्पन्नः पुत्रः । तत्पुत्रा विशाखादयः । **ष०** ६ । १४ ॥

**स्तनयित्नवः** । विद्योतस्य पुत्राः । **ष०** ६ । ५ ॥

**स्तम्भनम्** । अग्न्यादीनां निर्वीर्यकरणरूपा सिद्धिः । **ए०** १५ । २९ ॥

**१ स्तुतिः** । भगवत्स्तोत्रम् । अर्जुनेन । **प्र०** ७ । २२--२५ ॥ उत्तरादेव्या । ८ । ९ ॥ कुन्त्या । ८ । १८--४३ ॥ भीष्माचार्येण । ९ । ३२--४२ ॥ हास्तिनपुरस्त्रीभिः । १० । २१--३० ॥ आनर्तदेशजनैः । ११ । ६--९ ॥ शुकाचार्येण । **द्वि०** ४ । १२--२४ ॥ तत्त्वाभिमानिदेवैः । **तृ०** ५ । ३८--५० ॥ ब्रह्मणा । ५ । १२--१६ । ९ । १--२५ ॥ रुद्रेण कृता स्तुतिः । १४ । ३४--३५ ॥ ऋषिभिः । १३ । ३४--४५ ॥ सनकादिभिः । १५ । ४६--५० ॥ देवैः । १९ । ३० ॥ ब्रह्मणा । २० । २७ ॥ कर्दमेन । २१ । १३--२१ ॥ २४ । २७--३४ ॥ गर्भस्थेन जीवेन । ३१ । १२--२१ ॥ देवहूत्या । ३३ । २--८ ॥ देवैः । **च०** १ । ५६--५७ ॥ दक्षप्रजापतिना । ७ । २६--४७ ॥ ध्रुवेण । ९ । ६--१७ ॥ धरादेव्या । १७ । २९--३६ ॥ पृथुना । २० । २३--३१ ॥ रुद्रेण । २४ ॥ ३३--६८ ॥ प्रचेतोभिः । ३० । २२--४२ ॥ नाभेर्यज्ञे ऋत्विग्भिः । **पं०** ३ । ४--१५ ॥ इलावृते रुद्रेण । १७ । १७--२४ ॥ भद्राश्वे भद्रश्रवोभिः । १८ । २--६ ॥ हरिवर्षे प्रह्लादेन नरसिंहस्तुतिः । १८ । ८--१४ ॥ केतुमाले रमादेव्या हृषीकेशस्तुतिः । १८--२३॥ रम्यकवर्षवासिना वैवस्वतमनुना मत्स्यरूपभगवत्स्तुतिः । २५--२८ ॥ कूर्मरूपिभगवत्स्तुतिः । ३०--३३ ॥ उत्तरकुरुषु भूदेव्या कृता यज्ञवराहस्तुतिः । ३५--३९ ॥ किंपुरुषे हनुमता श्रीरामस्तुतिः । १९ । ३--८ ॥ भारतवर्षे नारदेन नारायणाय । ११--१५ ॥ नारदेन ब्रह्मसभायाम् । २५ । ९--१३ ॥ दक्षप्रजापतिना कृता हंसगुह्याख्या स्तुतिः । **ष०** ४ । २३--३४ ॥ देवैः । ९ । २१--२७ ॥ ३१--४५ ॥ वृत्रासुरेण । १२ । २४--२७ ॥ चित्रकेतुना । १६ । ३४--४८ ॥ ब्रह्मादिदेवैर्नृसिंहाय । **स०** ८ । ४०--५५ ॥ प्रह्लादेन

नृसिंहाय । ९ । ८–५० ॥ ब्रह्मणा । अ० ५ । २६–५० ॥ ६ । ८–१७ ॥ देवकीसूतिकागृहे ब्रह्मणा । द० २ । २६–४० ॥ वसुदेवेन । ३ । १३–२१ ॥ देवक्या । २४–२७ ॥ नलकूबरमणिग्रीवाभ्याम् । १० । २९–३६ ॥ ब्रह्मणा । १४ । १–४० ॥ नागपत्नीभिः । १६ । ३९–५० ॥ इन्द्रेण । २७ । ४–१३ ॥ सुरभ्या । १९–२० ॥ वरुणेन । २८ । ५–८ ॥ गोपिकाभिः । २९ । ३१–४१ ॥ नारदेन । ३७ । १०–२४ ॥ अक्रूरेण । ३८ । ७–२२ ॥ ४० । १–३० ॥ सुदामनाम्ना मालाकारेण । ४१ । ४५–४७ ॥ पुनरक्रूरेण । ४८ । १८–२७ ॥ कुन्त्या । ४९ । ११–१३ ॥ मुचुकुन्देन । ५१ । ४६–४८ ॥ जाम्बवता । ५६ । २५–२८ ॥ भूदेव्या । ५९ । २५–३१ ॥ माहेश्वरज्वरेण । ६३ । २५–२८ ॥ रुद्रेण । ३४–४५ ॥ कृकलासरूपिणा नृगेण । ६४ । २६–२९ ॥ राजभिर्दूतद्वारा । ७० । २५–२९ ॥ राजभिः । ७३ । ८–१६ ॥ सुहृद्भिः । ८३ । ३–४ ॥ ऋषिभिः । ८४ । १६–२६ ॥ वसुदेवेन । ८५ । ३–२० ॥ देवक्या । २९–३१ ॥ महाबलिना । ३९–४६ ॥ बहुलाश्वेन । ८६ । ३१–३५ ॥ श्रुतदेवेन । ४४–४८ ॥ देवैः । ए०४ । ९–११ ॥ जायन्तेयैः । ५ । २९–३० ॥ ३३–३४ ॥ देवैर्नरनारायणाय । ६ । ७–१९ ॥ उद्धवेन । २९ । ३–६ ॥ मार्कण्डेयेन । द्वा० ८ । ४१–४९ ॥

**२ स्तुतिः** । प्रतिहर्तुर्भार्या । पं० १५ । ५ ॥

**स्तोत्रम्** । १ स्तुतिशब्दं पश्यत ॥

**स्तोकः** । गोपालः । द० १५ । २० ॥

**स्त्री** । **स्त्रियः** । तत्कृता भगवत्स्तुतिः । प्र० १० । २१–३० ॥ तासां सौन्दर्यवर्णनम् । तृ० २० । २९–३१ ॥ २२ । १७–१८ । ३६ ॥ च० २५ । २२–२४ ॥ पं० २ । ६–१६ ॥ अ० ८ । ४२–४६ ॥ १२ । १८–२२ ॥ द० ६ । ५–६ ॥ ९ । ३ । तासां तत्सङ्गिनां च निन्दा । तृ० ३१ । ३२–४३ ॥ पं० ५ । २ ॥ १४ । ९ ॥ ष० १८ । २९–३० । ४०–४२ । स० ६ । १७–१८ ॥ १२ । ९ ॥ १४ । ११–१३ ॥ अ० ९ । ९–१० ॥ न० ६ । ५०–५२ ॥ १४ । ३६–३८ ॥ १९ । १७ । ए० ८ । ७–१४ ॥ १४ । २९–३० ॥ २६ । ८–२४ ॥ तासां स्वभावः । ष० १८ । ४१–४२ ॥ तद्धर्माः । स० ११ । २५–२९ ॥ तास्विन्द्रेण ब्रह्महत्याविभागः ताभ्यः शश्वत्कामवरदानं च । ष० ९ । ९ ॥ तासां पतिरेव दैवतम् । ष० १८ । ३२–३६ ॥ अनेकपुरुषाणामेका भार्या । च० ३० । १६ ॥ ष० ४ । १६ ॥ न० २२ । २८ ॥ २४ । ३४–३६ ॥

**स्थण्डिलेयुः** । क्ष० सो० वं० । रौद्राश्वस्य पुत्रः । न० २० । ४ ॥

**स्थानम्** । पुराणलक्षणम् । पं० १–२६ ॥ द्वि० १० । ४ ॥

**स्थितिः** । वैकुण्ठविजयः जगतः पालनं च । स्थानशब्दं पश्यत । द्वि० १० । ४ ॥

**स्मयः** । धर्मप्रजापतेः पुत्रः । तन्माता पुष्टिः । च० १ । ५१ ॥

**स्मृतिः** । गुणः । प्र० १६ । २८ ॥

**स्यमन्तकः** । मणिः । तस्य सत्राजिता सूर्यात्प्राप्तिः द० ५६ । १-३ ॥ जाम्बवता तस्यापहरणम् । १४ ॥ जाम्बवता जाम्बवत्या सह तस्य मणेः श्रीकृष्णाय प्रदानम् । ३२ ॥ श्रीकृष्णेन सत्राजिते दत्तस्य तस्य पुनः सत्राजिता श्रीकृष्णाय सत्यभामया सह दानम् । ४०--४४ ॥

**स्यमन्तपञ्चकम् । समन्तपञ्चकम्** । परशुरामेण क्षत्रियान्हत्वा तद्रुधिरेण निर्मितं ह्रदानां पञ्चकम् । न० १६ । १९ ॥

**स्वः** । स्वर्लोकः । तृतीय ऊर्ध्वलोकः । तदुत्पत्तिः । द्वि० ५ । ३८--४२ ॥

**स्वच्छन्दमृत्युः** । सिद्धिः । ए० १५ । ७ । २४ ॥

**१ स्वधा** । स्वायंभुवदक्षस्य पुत्री । अग्निष्वात्तादिपितृगणस्य पत्नी । तत्पुत्र्यौ वयुना धारणी च । च० १ । ६३--६४ ॥

**२ स्वधा** । प्राचेतसदक्षप्रजापतिपुत्री । अङ्गिरःप्रजापतेर्भार्या । तत्पुत्राः पितरः । ष० ६ । १९ ॥

**३ स्वधा** । पितॄनुद्दिश्य द्रव्यत्यागः द्वि० ७ । ३८ ॥

**स्वधामा** । द्वादशमन्वन्तरीयो भगवदवतारः । अ० १३ । २९ ॥

**स्वभावः** । प्र० १७ । १९ ॥ द्वि० । ५ । १४ । २१ । ३४ ॥ ६ । ४१ ॥

**स्वयंभोजः** । क्ष० सो० वं० । ४ शिनेः पुत्रः । तत्पुत्रः हृदीकः । न० २४ । २६ ॥

**स्वरसः** । शाल्मलिद्वीपस्थः पर्वतः । पं० २० । १० ॥

**स्वराः** । सप्तानां तेषां ब्रह्मण उत्पत्तिः । तृ० १२ । ४७ ॥

**स्वर्गसुखम्** । ए० १० । २३--२६ ॥ १९ । ४२ ॥

**स्वर्गः** । जामेः पुत्रः । तत्पुत्रः नन्दिः । ष० ६ । ६ ॥ **स्वर्णप्रस्थः** । जम्बूद्वीपस्योपद्वीपः । पं० १९ । २९--३० ॥

**स्वर्णरोमा** । क्ष० सू० वं० । महारोम्णः पुत्रः । तत्पुत्रः ह्रस्वरोमा । न० १३ । १७ ॥

**१ स्वर्भानुः** । राहुः । पं० २४ । १ ॥ दनुपुत्रस्य विप्रचित्तेः पुत्रः दनुपुत्रस्त्वन्यः । शेषं राहुशब्दे पश्यत ॥

**२ स्वर्भानुः** । दनुपुत्रोऽसुरः । तत्पुत्री नमुचेर्भार्या सुप्रभा । ष० ६ । ३०--३२ ॥

**३ स्वर्भानुः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता सत्यभामा । द० ६१ । १० ॥

**स्वर्लोकः** तृतीय ऊर्ध्वलोकः । अस्य ज्योतिरिति नामान्तरम् । द्वि० १ । २८ ॥ ५ । ३८ ॥

**स्वर्वीथी** । ध्रुवपुत्रस्य वत्सरस्य भार्या । च० १३ । १२ ॥ शेषं २ वत्सरशब्दे पश्यत ॥

**स्वह्नः** । तुषितेष्वन्यतमः । च० ? । ७ ॥ तुषितशब्दं च पश्यत ॥

**स्वातन्त्र्यम्** । गुणः । प्र० १६ । २८ ॥

**स्वायंभुवः** । प्रथमो मनुः । तद्भार्या शतरूपा । तयोर्दम्पत्योरेककाले ब्रह्मणो देहादुत्पत्तिः । तृ० १२ । ५३ ॥ तत्पुत्रौ प्रियव्रत उत्तानपादश्च । १२ । ५५ ॥ च० ८ । ७ ॥ दुहितरः आकूतिः देवहूतिः प्रसूतिश्चेति तिस्रः । १ । १ ॥ तृ० । १२ । ५४ ॥ ब्रह्मणा सह संवादः । १३ । ६--१७ ॥ तस्य स्वपुत्र्या देवहूत्या वरसंपादनार्थं

कर्दमाश्रमगमनम् । २१ । ३६ ॥ तेन ऋषिभ्यो वर्णाश्रमधर्मकथनम् । २२ । ३८ ॥ तेन ध्रुवाय ज्ञानोपदेशः । च० ११ । ७--३४ ॥ सुनन्दायां तपस्यता तेन ईशावास्यादिमन्त्रैर्भगवतः स्तुतिः । अ० १ । ९--१६ ॥ तं जग्धुमागतेभ्यो रक्षोभ्यः यज्ञनाम्ना भगवता तस्य परित्राणम् । १७--१८ ॥

**स्वायंभुवमन्वन्तरम्** । प्रथममन्वन्तरशब्दं पश्यत ॥

**स्वारोचिषः** । द्वितीयो मनुः । अग्नेः पुत्रः । तत्पुत्राः द्युमान् सुषेणः इत्याद्याः । अ० १ । २० ॥

**स्वारोचिषमन्वन्तरम्** । द्वितीयमन्वन्तरशब्दं पश्यत ॥

१ **स्वाहा** । स्वायंभुवदक्षप्रजापतिपुत्री । प्रधानाग्नेर्भार्या । तत्पुत्राः पावकः पवमानः शुचिश्च । **च०** १ । ६० ॥

२ **स्वाहा** । देवानुद्दिश्य द्रव्यत्यागः । **द्वि०** ७ । ३८ ॥

## ह०

१ **हंसः** । मेरोः केसरपर्वतः । **पं०** १६ । २६ ॥

२ **हंसः** । भगवदवतारः ॥ **द०** २ । ४० ॥

३ **हंसः** । संन्यासावान्तरभेदः । **तृ०** १२ । ४३ ॥ **प्र०** ५ । १० ॥

४ **हंसः** । ब्रह्मपुत्रः । ऊर्ध्वरेताः । **च०** ८ । १ ॥

**हंसगुह्यम्** । २ दक्षकृतं भगवत्स्तोत्रम् । **प०** ४ । २२ ३४ ॥

**हनूमान्** । किंपुरुषखण्डस्थेन तेन श्रीरामस्तुतिः । **पं०** १९ । १--८ ॥ **द्वि०** ७ । ४५ ॥ **न०** १० । १९ ॥

१ **हयग्रीवः** । परमात्मनोऽवतारः । **द्वि०** ७ । ११ ॥ तन्मन्त्रः । **पं०** १८ । २ ॥ तत्स्तुतिः । ५--६ ॥ **स०** ९ । ३७ ॥

२ **हयग्रीवः** । दनुपुत्रोऽसुरः । **प०** ६ । ३० ॥

**हयशीर्षः** । १ हयग्रीवशब्दं पश्यत ॥

**हयशिराः** । वैश्वानरनामकदानवपुत्री क्रतुनामकासुरस्य भार्या । **प०** ६ । ३४ ॥

**हरयः** । तामसमन्वन्तरीया देवाः । **अ०** १ । २८ ॥

१ **हरिः** । गजेन्द्रमोक्षणार्थमवतीर्णो भगवदवतारः । **द्वि०** ७ । १५--१६ ॥ तत्पिता हरिमेधाः । तन्माता हरिणी । **अ०** १ । ३०--॥

२ **हरिः** । ऋषभदेवस्य पुत्रः । तन्माता जयन्ती । **पं०** ४ । ११ ॥ **ए०** २ । २१ ॥ नेन निमिराजं भगवद्धर्मकथनम् । ४५--५५ ॥

**हरिकथामाहात्म्यम्** । **प्र०** १ । १६-१९ ॥ २ । ५, १५--१८ ॥ ५ । १०, २६--२८ ॥ ६ । ३४--३६ ॥ १६ । ६--९ ॥ १८ । १०, १२, १४--१५, १७, ॥ १९ । १५--१६ ॥ **द्वि०** १ । ७ ॥ २ । ३७ ॥ ३ । १२ ॥ ४ । ५ ॥ ८ । ४-६ ॥ **तृ०** ४ । २७ ॥ ५ । १--१३, १५, ४५ ॥ ६ । ३५-३६ ॥ ७ । १४ ॥ ९ । ५ ॥ १३ । ५० ॥ १४ । ४--५ ॥ १५ । ४८ ॥ १६ । ६ ॥ १९ । ३२--३३ ॥ २५ । २५, ३४ ॥ **च०** ७ । ३५, ४४ ॥ ९ । ११ ॥ २० । २४--२६ ॥ २३ । १२ ॥ २९ । ४०--४१ ॥ ३० । १९-२० ॥ **पं०** १२ । १३ ॥ १८ । ११--१४ ॥ **प०** ३ । २६-३२ ॥ ९ । ३९ ॥ **न०** २४ । ६१ ॥ **द०** १ । ४, १३--१६ ॥ ७ । १--२ । १३ । २ ॥ १४ । ३, ५ ॥ ४६ । ४६ ॥ ४७ । १८ ॥ ६० । ४२ ॥

७० । ३९ ॥ ८० । ? ॥ ८३ । ३ ॥ ८६ । ३४ ॥ ८७ । १६, २१, ४० ॥ ९० । ४९--५० ॥ ए० ३ । २ ॥ ५ । ३६--३७॥ ६ । ९, १९, २४, ४४, ४८--४९ ॥ ११ । २० ॥ १४ । २७ ॥ २६ । २८--२९ ॥ द्वा० ३ । १४--१५, ५१--५२ ॥ ४ । ३९--४० ॥ १२ । ४८--५१ ॥

**हरिकेशः** । क्ष० सो० वं० । श्यामकस्य पुत्रः । तन्माता शूरभूमिः । **न० २४** । ४२ ॥

**हरिणात्** शिक्षणीया गुणाः । **ए० ८** । १७--१८ ॥

**हरितः** । क्ष० सू० वं० । रोहितस्य पुत्रः । **न० ८** । १ ॥

**हरिताः** । द्वादशमन्वन्तरीया देवाः। **अ० १३** । २८ ॥

**हरिणी** । हरिमेधसो भार्या । तत्पुत्रो हरिः । **अ० १** । ३० ॥

**हरिमेधाः** । ऋषिः । तद्भार्या हरिणी । तत्पुत्रो हरिः । **अ० १** । ३० ॥

**१ हरिवर्षः** । आग्नीध्रस्य पुत्रः । तद्भार्या मेरोः पुत्री उग्रदंष्ट्री । **पं० २** । १९--२३ ॥

**२ हरिवर्षः** । जम्बूद्वीपस्थं वर्षम् । तदधिपतिः आग्नीध्रपुत्रः हरिवर्षः । **पं० १८** । ७--१४ ॥

**हरिश्चन्द्रः** । क्ष० सू० वं० । त्रिशङ्कोः पुत्रः । तत्पुत्रो रोहितः । **न० ७** । ७--९ ॥ तस्य वरुणेन यज्ञार्थं विवादः तेन वरुणोद्देशेन पुरुषमेधेन शुनःशेपं पशुं कृत्वा यजनं च । ९--२१ ॥

**हरिश्मश्रुः** । हिरण्यकशिपोः पुत्रः । **स० २** । १८ ॥

**हरिहरयोरैक्यम्** । **च० ७** । ५०--५४ ॥

**हर्यक्षः** । पृथोः पुत्रः । **च० २४** । २ ॥

**हर्यवनः** । क्ष० सो० वं० । कृतस्य पुत्रः । **न० १७** । १७ ॥

**१ हर्यश्वः** । क्ष० सू० वं० । दृढाश्वस्य पुत्रः । तत्पुत्रो निकुम्भः । **न० ६** । २४ ॥

**२ हर्यश्वः** । क्ष० सू० वं० । अनरण्यस्य पुत्रः । तत्पुत्रः अरुणः । **न० ७** । ४ ॥

**३ हर्यश्वः** । क्ष० सू० वं० । १ धृष्टकेतोः पुत्रः । तत्पुत्रः मरुः । **न० १३** । १५ ॥

**हर्यश्वाः** । २ दक्षप्रजापतेः पुत्राः । तन्माता असिक्नी । नारायणसरसि तपश्चरतां तेषां नारदोदितकूटवाचःश्रवणेन प्रव्रजनम् । **ष० ५** । ३--२१ ॥

**हर्षः** । क्ष० सो० वं० । श्रीकृष्णस्य पुत्रः । तन्माता मित्रविन्दा । **द० ६१** । १६ ॥

**हविर्धानः** । पृथुपुत्रस्य अन्तर्धानस्य पुत्रः । तन्माता नभस्वती । **च० २४** । ५ ॥ तद्भार्या हविर्धानी । तत्पुत्राः बर्हिषत् (प्राचीनबर्हिः) गयः शुक्लः कृष्णः सत्यः जितव्रतः इति षट् । ८ ॥

**१ हविर्धानी** । हविर्धानस्य भार्या । **च० २४** । ८॥

**२ हविर्धानी** । कामधेनुः । सुरभिः तस्याः क्षीरसमुद्रादुत्पत्तिः । **अ० ८** । १ ॥

**हविर्भुक्** । कर्दमप्रजापतिपुत्री । तन्माता देवहूतिः । पुलस्त्यस्य भार्या । **तृ० २४** । २२ ॥ तत्पुत्रौ अगस्त्यः विश्रवाश्च । **च० १** । ३६ ॥

**१ हविष्मान्** । षष्ठमन्वन्तरीय ऋषिः । **अ० ५** । ८ ॥

**२ हविष्मान्** । दशममन्वन्तरीय ऋषिः । **अ० १३** । २२ ॥

**१ हस्तः** । पाणिः । कर्मेन्द्रियम् । **न० ६** । २० ॥

**२ हस्तः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता रोचना । न० २४ । ४९ ॥

**हस्तिनापुरी** । हास्तिनपुरशब्दं पश्यत ॥

**हस्ती** । क्ष० सो० वं० । बृहत्क्षत्रस्य पुत्रः । हास्तिनपुरस्य निर्माता । न० २१ । २० ॥ तत्पुत्रौ अजमीढः । द्विमीढश्च । २१ ॥

**हाटकरसः** । अतललोकस्थः रसायनविशेषः । पं० २४ । १६ ॥

**हाटकी** । वितललोकस्था नदी । भवयोर्वीर्योत्पन्ना । पं० २४ । १७ ॥

**हाटकेश्वरः** । वितललोकाधिपतिर्भवः पं० २४ । १७ ॥

**१ हारीतः** । ऋषिः । विश्वामित्रस्य पुत्रः । न० १६ । ३६ ॥

**२ हारीतः** । पौराणिकः । द्वा० ७ । ५ ॥

**हार्दिक्यः** । कृतवर्मशब्दं पश्यत ॥

**हालाहलम्** । विषशब्दं पश्यत ॥

**हास्तिनपुरम्** । हस्तिनाम्ना राज्ञा निर्मितं पुरम् । न० २१ । २० ॥ तस्मिन् गङ्गाजलनिमग्ने सति तद्राजेन नेमिचक्रेण कौशाम्ब्यामवस्थानम् । न० २२ । ४० ॥ तत्पुरं गङ्गायां पातयितुं बलरामेण लाङ्गलेनाकर्षणम् । द० ६८ । ४१ ॥ तत्पुरं गङ्गाया दक्षिणे तीरे वर्तते । ५४ ॥

**हिडिम्बा** । १ भीमसेनस्य भार्या । राक्षसी । तत्पुत्रः घटोत्कचः । न० २२ । ३१ ॥

**हिमवान्** । **हिमालयः** । जम्बूद्वीपस्थः भारतकिंपुरुषयोर्मर्यादागिरिः । पं० १६ । ९ ॥ तद्भार्या मेना । च० ७ । ५८ ॥ [तत्पुत्र्या जननादिकथा । च० ७ । ६२–६५ ॥]

**हिरण्मयम्** । जम्बूद्वीपस्थं वर्षम् । पं० १८ । २९--३३ ॥

**हिरण्मयः** । आग्नीध्रस्य पुत्रः । वर्षपतिः । तन्माता पूर्वचित्तिरप्सराः । तद्भार्या मेरोः पुत्री श्यामा । पं० २ । १९--२३ ॥

**हिरण्यकशिपुः** । कश्यपऋषेः पुत्रोऽसुरः । तन्माता दितिः । तद्भार्या जम्भस्य पुत्री कयाधूः । तज्जननकथा । तृ० २ । २० ॥ तत्पुत्राः संह्रादः अनुह्रादः ह्रादः प्रह्लादश्च । तत्पुत्री सिंहिका । तद्भ्राता हिरण्याक्षः । अयं पूर्वजन्मनि भगवत्पार्षदयोः जयविजयाख्ययोर्मध्ये सनकादिभिः शप्तो जयः । तृ० १५ । २–३५ ॥ स० १ । ३७--४२ ॥ तेन देवद्विजधर्मनाशनम् । २ । ११ ॥ तेन हिरण्याक्षभार्यायै रुषाभानवे तत्वोपदेशः । २१--६० ॥ तेन ब्रह्माणमुद्दिश्य तपश्चरणम् । ३ । १–१६ ॥ तत्कृता ब्रह्मस्तुतिः । २६--३४ ॥ तस्मै ब्रह्मणा वरदानम् । ४ । २ ॥ तेनेन्द्रलोकविजयः । ७--२० ॥ तेन प्रह्लादस्योपद्रवकरणम् । ५ । ३३--४४ ॥ तस्य नृसिंहेन संहारः । ८ । २८–३० ॥

**हिरण्यनाभः** । क्ष० सू० वं० । पूर्वं क्षत्रियो भूत्वा पश्चात् ब्राह्मण्यं प्राप्तः । विधृतेः पुत्रः । सः सामगस्य जैमिनेः शिष्यः । तच्छिष्यः कौसल्यो याज्ञवल्क्यः । तत्पुत्रः पुष्यः । न० १२ । ३–५ ॥ तस्यान्यः शिष्यः कृतिः । न० २१ । २८ ॥ सः सुकर्मणोऽपि शिष्यः । द्वा० ६ । ७७ ॥ तस्य ज्ञानिमध्ये परिगणनम् । प० १५ । १५ ॥

2010



**(हि)रण्यरेताः** । प्रियव्रतस्य पुत्रः । पं० ५ । १ । २५ ॥

**(हि)रण्यरोमा** । पञ्चममन्वन्तरीय ऋषिः । अ० ५ । ३ ॥

**(हि)रण्यग्रीवः** । प्लक्षद्वीपस्थः पर्वतः । पं० २० । ४ ॥

**हिरण्याक्षः** । कश्यपपुत्रोऽसुरः । तन्माता दितिः । तद्भ्राता हिरण्यकशिपुः । तस्योत्पत्तिः । तृ० १७ । २--१७ ॥ तस्य पूर्वजन्मनि भगवत्पार्षदत्वं शापप्राप्तिश्च । तृ० १५ । २--३५ ॥ स० १ । ३७--४२ ॥ तद्भार्या रुषाभानु । २ । १९ ॥ तत्पुत्राः । १८ ॥ तस्य वरुणेन सह युद्धम् । तृ० १७ । २६--३१ ॥ तस्य वराहेण युद्धम् । तृ० १८ । २--२१ ॥ १९ । २--२५ ॥ तस्य वधो वराहेण । तृ० १३ । ३२ ॥ १९ । २६--२९ ॥

२ **हिरण्याक्षः** । क्ष० सो० वं० । यदुवंश्यस्य श्यामकस्य पुत्रः । तन्माता शूरभूमिः । न० २४ । ४२ ॥

**(ही)नः** । क्ष० सो० वं० । सहदेवस्य पुत्रः । न० १७ । १७ ॥

**हूहूः** । अरिष्टायाः पुत्रो देवगन्धर्वः । देवलशापेन तस्य ग्राहत्वप्राप्तिः । अ० ४ । ३ ॥

**हृदयग्रन्थिः** । प्र० २ । २१ ॥

**हृदीकः** । क्ष० सो० वं० । स्वयंभोजस्य पुत्रः । तत्पुत्राः देवबाहुः शतधनुः कृतवर्मा चेति त्रयः । तस्यान्यः पुत्रो देवमीढः । न० २४ । २६--२७ ॥

**हृषीकेशमन्त्रः** । रमयादाहृतः । पं० १८ । १८ ॥

**हेतिः** । असुरः । अ० १० । २८ ॥

**हेमः** । क्ष० सो० वं० । रुशद्रथस्य पुत्रः । तत्पुत्रः सुतपाः । न० २३ । ४ ॥

**हेमकूटः** । जम्बूद्वीपस्थः पर्वतः । पं० १६ । ९ ॥

**हेमचन्द्रः** । क्ष० सू० वं० । विशालस्य पुत्रः । तत्पुत्रः १ धूम्राक्षः । न० २ । ३४ ॥

**हेमन्तऋतुः** । द० २२ । १ ॥

**हेमाङ्गदः** । क्ष० सो० वं० । वसुदेवस्य पुत्रः । तन्माता रोचना । न० २४ । ४९ ॥

**हैहयः** । क्ष० सो० वं० । शतजितः पुत्रः । तत्पुत्रो धर्मः । न० २३ । २१ ॥

**होत्रकः** । क्ष० सो० वं० । काञ्चनस्य पुत्रः तत्पुत्रः २ जह्नुः । न० १५ । ३ ॥

**ह्रस्वरोमा** । क्ष० सू० वं० । स्वर्णरोम्णः पुत्रः । तत्पुत्रः सीरध्वजः । न० १३ । १७--१८ ॥

**ह्रादः** । असुरः । हिरण्यकशिपोः पुत्रः । तद्भार्या धमनिः । तत्पुत्रौ वातापिः इल्वलश्च । ष० १८ । १५ ॥

**ह्रीः** । दक्षप्रजापतेः पुत्री । धर्मप्रजापतेर्भार्या । तत्पुत्रः प्रश्रयः । च० १ । ५२ ॥

**॥ श्रीमद्भागवतानुक्रमणी संपूर्णा**

